॥ श्रीः ॥

# ॥ श्रीमद्वाल्मीकिरामायणम् ॥

संपुटः ६.

## ॥ युद्धकाण्डः ॥

द्वितीयः खण्डः ॥

# YUDDHAKANDAM

**PART I**

Published by
The Educational Supplies Depot,
PALGHAT.

॥ श्रीः ॥

# ॥ श्रीमद्वाल्मीकिरामायणम् ॥



## ॥ युद्धकाण्डः ॥

प्रथमः खण्डः ॥



# YUDDHAKANDAM

## PART I








Published by

The Educational Supplies Depot,

PALGHAT.

Price Rs. ~~2/-~~

## ॥ विषयानुक्रमणिका ॥

॥ श्रीः ॥

# ॥ श्रीमद्वाल्मीकिरामायणम् ॥



## ॥ युद्धकाण्डः ॥



### प्रथमः सर्गः ॥



श्रुत्वा हनुमतो वाक्यं यथावदभिभाषितम् ।
रामः प्रीतिसमायुक्तो वाक्यमुत्तरमब्रवीत् ॥ १

कृतं हनुमता कार्यं सुमहद्भुवि दुष्करम् ।
मनसापि यदन्येन न शक्यं धरणीतले ॥ २

न हि तं परिपश्यामि यस्तरेत महार्णवम् ।
अन्यत्र गरुडाद्वायोरन्यत्र च हनूमतः ॥ ३

देवदानवयक्षाणां गन्धर्वोरगरक्षसाम् ।
अप्रधृष्यां पुरीं लङ्कां रावणेन सुरक्षिताम् ॥ ४

यो वीर्यबलसम्पन्नो द्विषद्भिरनिवारितः ।
प्रविष्टः सत्वमाश्रित्य जीवन् को नाम निष्क्रमेत् ॥ ५

को विशेत्सुदुराधर्षां राक्षसैश्च सुरक्षिताम् ।
यो वीर्यबलसम्पन्नो न समः स्याद्धनूमतः ॥ ६

भृत्यकार्यं हनुमता सुग्रीवस्य कृतं महत् ।
एवं विधाय स्वबलं सदृशं विक्रमस्य च ॥ ७

यो हि भृत्यो नियुक्तः सन् भर्त्रा कर्मणि दुष्करे ।
कुर्यात्तदनुरागेण तमाहुः पुरुषोत्तमम् ॥ ८

भृत्यस्तु यः परं कार्यं न कुर्यान्नृपतेः प्रियम् ।
भृत्यकार्ये समर्थोऽपि तमाहुर्मध्यमं नरम् ॥ ९

नियुक्तो नृपतेः कार्यं न कुर्याद्यः समाहितः ।
भृत्यो युक्तः समर्थोऽपि तमाहुः पुरुषाधमम् ॥ १०

तन्नियोगे नियुक्तेन कृतं कर्म हनूमता ।
न चात्मा लघुतां नीतः सुग्रीवश्चापि तोषितः ॥ ११

अहं च रघुवंशश्च लक्ष्मणश्च महाबलः ।
वैदेह्या दर्शनेनाद्य धर्मतः परिरक्षिताः ॥ १२

इदं तु मम दीनस्य मनो भूयः प्रधक्ष्यति ।
यदिहास्य प्रियाख्यातुर्न कुर्मि सदृशं प्रियम् ॥ १३

एष सर्वस्वभूतस्तु परिष्वङ्गो हनूमतः ।
मया कालमिमं प्राप्य दत्तश्चास्य महात्मनः ॥ १४

इत्युक्त्वा प्रीतिहृष्टाङ्गो राघवः परिषस्वजे ।
हनूमन्तं महात्मानं कृतकार्यमुपागतम् ॥ १५

ध्यात्वा पुनरुवाचेदं वचनं रघुसत्तमः ।
हरीणामीश्वरस्यैव सुग्रीवस्योपशृण्वतः ॥ १६

सर्वथा सुकृतं तावत् सीतायाः परिमार्गणम् ।
सागरं तु समासाद्य पुनर्नष्टं मनो मम ॥ १७

कथं नाम समुद्रस्य दुष्पारस्य महाम्भसः ।
हरयो दक्षिणं पारं गमिष्यन्ति समाहिताः ॥ १८

यद्यप्येवं तु वैदेह्या वृत्तान्तो गदितो मम ।
समुद्रपारगमने हरीणां किमिवोत्तरम् ॥ १९

इत्युक्त्वा शोकसंभ्रान्तो रामः शत्रुनिबर्हणः ।
हनूमन्तं महाबाहुस्ततो ध्यानमुपागमत् ॥ २०

इति प्रथमः सर्गः ॥



## द्वितीयः सर्गः ॥

तं तु शोकपरिद्यूनं रामं दशरथात्मजम् ।
उवाच वचनं श्रीमान् सुग्रीवः शोकनाशनम् ॥ १

किं त्वं सन्तप्यसे वीर यथान्यः प्राकृतस्तथा ।
मैवं भूस्त्यज सन्तापं कृतघ्न इव सौहृदम् ॥ २

सन्तापस्य च ते स्थानं न हि पश्यामि राघव ।
प्रवृत्तावुपलब्धायां ज्ञाते च निलये रिपोः ॥ ३

मतिमाञ्शास्त्रवित्प्राज्ञः पण्डितश्चासि राघव ।
त्यजेमां प्राकृतां बुद्धिं कृतात्मेवात्मदूषणीम् ॥ ४

समुद्रं लङ्घयित्वा तु महानक्रसमाकुलम् ।
लङ्कामारोहयिष्यामो हनिष्यामश्च रावणम् ॥ ५

निरुत्साहस्य दीनस्य शोकपर्याकुलात्मनः ।
सर्वार्था ह्यवसीदन्ति व्यसनं चाधिगच्छति ॥ ६

इमे शूराः समर्थाश्च सर्वे ते हरियूथपाः ।
त्वत्प्रियार्थं कृतोत्साहाः प्रवेष्टुमपि पावकम् ॥ ७

एषां हर्षेण जानामि तर्कश्चास्ति दृढो मम ॥

विक्रमेण समानेष्ये सीतां हत्वा यथा रिपुम् ।
रावणं पापकर्माणं तथा त्वं कर्तुमर्हसि ॥ ८

सेतुरत्र यथा बध्येद्यथा पश्येम तां पुरीम् ।
तस्य राक्षसराजस्य तथा त्वं कुरु राघव ॥ ९

दृष्ट्वैव च पुरीं लङ्कां त्रिकूटशिखरे स्थिताम् ।
हतं च रावणं युद्धे दर्शनादुपधारय ॥ १०

अबद्ध्वा सागरे सेतुं घोरे तु वरुणालये ।
लङ्का न मर्दितुं शक्या सेन्द्रैरपि सुरासुरैः ॥ ११

सेतुर्बद्धः समुद्रे च यावल्लङ्कासमीपतः ।
सर्वं तीर्णं च वै सैन्यं जितमित्युपधारय ॥ १२

इमे हि समरे शूरा हरयः कामरूपिणः ॥ १३

तदलं विक्लवा बुद्धी राजन् सर्वार्थनाशिनी ।
पुरुषस्य हि लोकेऽस्मिन् शोकः शौर्यापकर्षणः ॥ १४

यत्तु कार्यं मनुष्येण शौण्डीर्यमवलम्बता ।
तदलङ्करणायैव कर्तुर्भवति सत्वरम् ॥
अस्मिन्काले महाप्राज्ञ सत्त्वमातिष्ठ तेजसा ॥ १५

शूराणां हि मनुष्याणां त्वद्विधानां महात्मनाम् ।
विनष्टे वा प्रणष्टे वा क्षमं नाप्यनुशोचितुम् ॥ १६

त्वं तु बुद्धिमतां श्रेष्ठः सर्वशास्त्रार्थकोविदः ।
मद्विधैः सचिवैः सार्धमरिं जेतुमिहार्हसि ॥ १७

न हि पश्याम्यहं कञ्चित् त्रिषु लोकेषु राघव ।
गृहीतधनुषो यस्ते तिष्ठेदभिमुखो रणे ॥ १८

वानरेषु समासक्तं न ते कार्यं विपत्स्यते ।
अचिराद्द्रक्ष्यसे सीतां तीर्त्वा सागरमक्षयम् ॥ १९

तदलं शोकमालम्ब्य क्रोधमालम्ब भूपते ।
निश्चेष्टाः क्षत्रिया मन्दाः सर्वे चण्डस्य बिभ्यति ॥ २०

लङ्घनार्थं सुघोरस्य समुद्रस्य नदीपतेः ।
सहास्माभिरिहोपेतः सूक्ष्मबुद्धिर्विचारय ॥ २१

सर्वं तीर्णं च मे सैन्यं जितमित्युपधार्यताम् ॥ २२

इमे च हरयः शूरा विक्रान्ताः कामरूपिणः ।
तानरीन्विधमिष्यन्ति शिलापादपवृष्टिभिः ॥ २३

कथञ्चित्परिपश्यामस्तं वयं वरुणालयम् ।
हतमित्येव तं मन्ये युद्धे समितिनन्दन ॥ २४

किमुक्त्वा बहुधा राम सर्वथा विजयी भवान् ।
निमित्तानि च पश्यामि मनो मे संप्रहृष्यति ॥ २५

इति द्वितीयः सर्गः ॥



## तृतीयः सर्गः ॥

सुग्रीवस्य वचः श्रुत्वा हेतुमत्परमार्थवत् ।
प्रतिजग्राह काकुत्स्थो हनुमन्तमथाब्रवीत् ॥ १

तपसा सेतुबन्धेन सागरोच्छोषणेन वा ।
सर्वथा सुसमर्थोऽस्मि सागरस्यास्य लङ्घने ॥ २

कति दुर्गाणि लङ्कायास्तत्त्वतस्तद्ब्रवीहि मे ।
ज्ञातुमिच्छामि तत्सर्वं दर्शनादिव वानर ॥ ३

बलस्य परिमाणं च द्वारदुर्गक्रियामपि ।
गुप्तिकर्म च लङ्काया रक्षसां सदनानि च ॥ ४

यथासुखं यथावच्च लङ्कायामसि दृष्टवान् ।
सर्वमाचक्ष्व तत्त्वेन सर्वथा कुशलो ह्यसि ॥ ५

श्रुत्वा रामस्य वचनं हनूमान्मारुतात्मजः ।
वाक्यं वाक्यविदां श्रेष्ठो रामं पुनरथाब्रवीत् ॥ ६

श्रूयतां सर्वमाख्यास्ये दुर्गकर्मविधानतः ।
गुप्ता पुरी यथा लङ्का रक्षिता च यथा बलैः ॥ ७

राक्षसाश्च यथा स्निग्धा रावणस्य तु तेजसा ।
परां समृद्धिं लङ्कायाः सागरस्य च भीमताम् ॥ ८

विभागं च बलौघस्य निर्देशं वाहनस्य च ।
एवमुक्त्वा कपिश्रेष्ठः कथयामास तत्वतः ॥ ९

हृष्टा प्रमुदिता लङ्का मत्तद्विपसमाकुला ।
महती रथसंपूर्णा रक्षोगणसमाकुला ॥
वाजिभिश्च सुसंपूर्णा सा पुरी दुर्गमा परैः ॥ १०

दृढबद्धकवाटानि महापरिघवन्ति च ।
चत्वारि विपुलान्यस्या द्वाराणि सुमहान्ति च ॥ ११

तत्रेषूपलयन्त्राणि बलवन्ति महान्ति च ।
आगतं परसैन्यं तैस्तत्र प्रतिनिवार्यते ॥ १२

द्वारेषु सुकृता भीमाः कालायसमयाः शिताः ।
शतशो रचिता वीरैः शतघ्न्यो रक्षसां गणैः ॥ १३

स सौवर्णमयस्तस्याः प्राकारो दुष्प्रधर्षणः ।
मणिविद्रुमवैडूर्यमुक्ताविरचितान्तरः ॥ १४

सर्वतश्च महाभीमाः शीततोयवहाः शुभाः ।
अगाधा ग्राहवत्यश्च परिघा मीनसेविताः ॥ १५

द्वारेषु तासां चत्वारः संक्रमाः परमायताः ।
यन्त्रैरुपेता बहुभिर्महद्भिर्गृहपङ्क्तिभिः ॥ १६

त्रायन्ते संक्रमास्तत्र परसैन्यागमे सति ।
यन्त्रैस्तैरवकीर्यन्ते परिखासु समन्ततः ॥ १७

एकस्त्वकम्प्यो बलवान्संक्रमः सुमहान्दृढः ।
काञ्चनैर्बहुभिःस्तम्भैर्वेदिकाभिश्च शोभितः ॥ १८

स्वयं प्रकृतिसम्पन्नो युयुत्सू राम रावणः ।
उत्थितश्चाप्रमत्तश्च बलानामनुदर्शने ॥ १९

लङ्का पुनर्निरालम्बा देवदुर्गा भयावहा ।
नादेयं पार्वतं वान्यं कृत्रिमं च चतुर्विधम् ॥ २०

स्थिता पारे समुद्रस्य दूरपारस्य राघव ।
नौपथश्चापि नास्त्यत्र निरादेशश्च सर्वतः ॥ २१

शैलाग्रे रचिता दुर्गा सा पूर्देवपुरोपमा ।
वाजिवारणसंपूर्णा लङ्का परमदुर्गमा ॥ २२

परिघाश्च शतघ्न्यश्च यन्त्राणि विविधानि च ।
शोभयन्ति पुरीं लङ्कां रावणस्य दुरात्मनः ॥ २३

अयुतं रक्षसामत्र पश्चिमद्वारमाश्रितम् ।
शूलहस्ता दुराधर्षाः सर्वे खड्गाग्रयोधिनः ॥ २४

नियुतं रक्षसामत्र दक्षिणद्वारमाश्रितम् ।
चतुरङ्गेन सैन्येन योधास्तत्राप्यनुत्तमाः ॥ २५

प्रयुतं रक्षसामत्र पूर्वद्वारं समाश्रितम् ।
चर्मखड्गधराः सर्वे तथा सर्वास्त्रकोविदाः ॥ २६

न्यर्बुदं रक्षसामत्र उत्तरद्वारमाश्रितम् ।
रथिनश्चाश्ववाहाश्च कुलपुत्राः सुपूजिताः ॥ २७

शतशोऽथ सहस्राणि मध्यमं स्कन्धमाश्रिताः ।
यातुधाना दुराधर्षाः शतकोटिश्च रक्षसाम् ॥ २८

बलैकदेशः क्षपितो राक्षसानां दुरात्मनाम् ॥ २९

ते मया संक्रमा भग्नाः परिखाश्चावपूरिताः ।
दग्धा च नगरी लङ्का प्राकाराश्चावसादिताः ॥ ३०

येन केन तु मार्गेण तराम वरुणालयम् ।
हतेति नगरी लङ्का वानरैरुपधार्यताम् ॥ ३१

अङ्गदो द्विविदो मैन्दो जाम्बवान्पनसो नलः ।
नीलः सेनापतिश्चैव बलशेषेण किं तव ॥ ३२

प्लवमाना हि लङ्कां तां रावणस्य महापुरीम् ।
सपर्वतवनां भित्त्वा सखातां सप्रतोरणाम् ॥ ३३

सप्राकारां सभवनामानयिष्यन्ति मैथिलीम् ।
एवमाज्ञापय क्षिप्रं बलानां सर्वसंग्रहम् ।
मुहूर्तेन तु युक्तेन प्रस्थानमभिरोचय ॥ ३४

इति तृतीयः सर्गः ॥



## चतुर्थः सर्गः ॥

श्रुत्वा हनुमतो वाक्यं यथावदनुपूर्वशः ।
ततोऽब्रवीन्महातेजा रामः सत्यपराक्रमः ॥ १

यां निवेदयसे भीमां पुरीं भीमस्य रक्षसः ।
क्षिप्रमेनां मथिष्यामि सत्यमेतद्ब्रवीमि ते ॥ २

अस्मिन्मुहूर्ते सुग्रीव प्रयाणमभिरोचय ।
युक्तो मुहूर्तो विजयः प्राप्तो मध्यं दिवाकरः ॥ ३

अस्मिन्मुहूर्ते विजये प्राप्ते मध्यं दिवाकरे ।
सीतां हृत्वा तु मे यातु क्वासौ यास्यति यास्यतः ॥ ४

सीता श्रुत्वाऽभियानं मे आशामेष्यति जीविते ।
जीवितान्तेऽमृतं स्पृष्ट्वा पीत्वा विषमिवातुरः ॥ ५

उत्तरा फल्गुनी ह्यद्य श्वस्तु हस्तेन योक्ष्यते ।
अभिप्रयाम सुग्रीव सर्वानीकसमावृताः ॥ ६

निमित्तानि च धन्यानि यानि प्रादुर्भवन्ति वै ।
निहत्य रावणं सङ्ख्ये ह्यानयिष्यामि जानकीम् ॥ ७

उपरिष्टाद्धि नयनं स्फुरमाणमिदं मम ।
विजयं समनुप्राप्तं शंसतीव मनोरथम् ॥ ८

ततो वानरराजेन लक्ष्मणेन च पूजितः ।
उवाच वचनं रामः पुनरप्यर्थकोविदः ॥ ९

अग्रे यातु बलस्यास्य नीलो मार्गमवेक्षितुम् ।
वृतः शतसहस्रेण वानराणां तरस्विनाम् ॥ १०

फलमूलवता नील शीतकाननवारिणा ।
पथा मधुमता चाशु सेनां सेनापते नय ॥ ११

दूषयेयुर्दुरात्मानः पथि मूलफलोदकम् ।
राक्षसाः परिरक्षेथास्तेभ्यस्त्वं नित्यमुद्यतः ॥ १२

निम्नेषु वनदुर्गेषु वनेषु च वनौकसः ।
अभिप्लुत्याशु पश्येयुः परेषां निहितं बलम् ॥ १३

यच्च फल्गु बलं किञ्चित्तदत्रैवोपनीयताम् ।
एतावद्धि तु कृत्यं नो विक्रमेण प्रयुज्यताम् ॥ १४

सागरौघनिभं भीममग्रानीकं महाबलाः ।
कपिसिंहाः प्रकर्षन्तु शतशोऽथ सहस्रशः ॥ १५

गजश्च गिरिसङ्काशो गवयश्च महाबलः ।
गवाक्षश्चाग्रतो यान्तु गवां दृप्ता इवर्षभाः ॥ १६

यातु वानरवाहिन्या वानरौघवतां पतिः ।
पालयन्दक्षिणं पार्श्वं ऋषभो वानरर्षभः ॥ १७

मन्धहस्तीव दुर्धर्षस्तरस्वी गन्धमादनः ।
यातु वानरवाहिन्याः सव्यं पार्श्वमधिष्ठितः ॥ १८

यास्यामि बलमध्येऽहं बलौघमभिहर्षयन् ।
अधिरुह्य हनूमन्तमैरावतमिवेश्वरः ॥ १९

अङ्गदेनैष संयातु लक्ष्मणश्चान्तकोपमः ।
सार्वभौमेन भूतेशो द्रविणाधिपतिर्यथा ॥ २०

जाम्बवांश्च सुषेणश्च वेगदर्शी च वानरः ।
ऋक्षराजो महासत्वः कुक्षिं रक्षन्तु ते त्रयः ॥ २१

राघवस्य वचः श्रुत्वा सुग्रीवो वाहिनीपतिः ।
व्यादिदेश महावीर्यान् वानरान्वानरर्षभः ॥ २२

ते वानरगणाः सर्वे समुत्पत्य युयुत्सवः ।
गुहाभ्यः शिखरेभ्यश्च आशु पुप्लुविरे तदा ॥ २३

ततो वानरराजेन लक्ष्मणेन च पूजितः ।
जगाम रामो धर्मात्मा ससैन्यो दक्षिणां दिशम् ॥ २४

शतैः शतसहस्रैश्च कोटीभिरयुतैरपि ।
वारणाभैश्च हरिभिर्ययौ परिवृतस्तदा ॥ २५

तं यान्तमनुयाति स्म महती हरिवाहिनी ।
हृष्टाः प्रमुदिताः सर्वे सुग्रीवेणाभिपालिताः ॥ २६

आप्लवन्तः प्लवन्तश्च गर्जन्तश्च प्लवङ्गमाः ।
क्ष्वेलन्तो विनदन्तश्च जग्मुर्वै दक्षिणां दिशम् ॥ २७

भक्षयन्तः सुगन्धीनि मधूनि च फलानि च ।
उद्वहन्तो महावृक्षान् मञ्जरीपुञ्जधारिणः ॥ २८

अन्योन्यं सहसा दृप्ता निर्वहन्ति क्षिपन्ति च ।
पततश्चाक्षिपन्त्यन्ये पातयन्तः परे परान् ॥ २९

रावणो नो निहन्तव्यः सर्वे च रजनीचराः ।
इति गर्जन्ति हरयो राघवस्य समीपतः ॥ ३०

पुरस्तादृषभो वीरो नीलः कुमुद एव च ।
पन्थानं शोधयन्ति स्म वानरैर्बहुभिः सह ॥ ३१

मध्ये तु राजा सुग्रीवो रामो लक्ष्मण एव च ।
बहुभिर्बलिभिर्भीमैर्वृताः शत्रुनिबर्हणैः ॥ ३२

हरिः शतबलिर्वीरः कोटीभिर्दशभिर्वृतः ।
सर्वामेको ह्यवष्टभ्य ररक्ष हरिवाहिनीम् ॥ ३३

कोटीशतपरीवारः केसरी पनसो गजः ।
अर्कश्चातिबलः पार्श्वमेकं तस्याभिरक्षति ॥ ३४

सुषेणो जाम्बवांश्चैव ऋक्षैर्बहुभिरावृतौ ।
सुग्रीवं पुरतः कृत्वा जघनं तौ ररक्षतुः ॥ ३५

तेषां सेनापतिर्वीरो नीलो वानरपुङ्गवः ।
सम्पतन् पततां श्रेष्ठस्तद्बलं पर्यवारयत् ॥ ३६

दरीमुखः प्रजङ्घश्च रम्भोऽथ रभसः कपिः ।
सर्वतश्च ययुर्वीरास्त्वरयन्तः प्लवङ्गमान् ॥ ३७

एवं ते हरिशार्दूला गच्छन्तो बलदर्पिताः ।
अपश्यंस्ते गिरिश्रेष्ठं सह्यं द्रुमलतायुतम् ॥
सरांसि च सुफुल्लानि तटाकानि महान्ति च ॥ ३८

रामस्य शासनं ज्ञात्वा भीमकोपस्य भीतवत् ।
वर्जयन्नगराभ्याशांस्तथा जनपदानपि ॥ ३९

सागरौघनिभं भीमं तद्वानरबलं महत् ।
निःससर्प महाघोषं भीमघोष इवार्णवः ॥ ४०

तस्य दाशरथेः पार्श्वे शूरास्ते कपिकुञ्जराः ।
तूर्णमापुप्लुवुः सर्वे सदश्वा इव चोदिताः ॥ ४१

कपिभ्यामुह्यमानौ तौ शुशुभाते नरर्षभौ ।
महद्भ्यामिव संस्पृष्टौ ग्रहाभ्यां चन्द्रभास्करौ ॥ ४२

ततो वानरराजेन लक्ष्मणेन च पूजितः ।
जगाम रामो धर्मात्मा ससैन्यो दक्षिणां दिशम् ॥ ४३

तमङ्गदगतो रामं लक्ष्मणः शुभया गिरा ।
उवाच प्रीतिपूर्णार्थं पूर्णार्थः प्रतिभानवान् ॥ ४४

हृतामवाप्य वैदेहीं क्षिप्रं हत्वा च रावणम् ।
समृद्धार्थः समृद्धार्थामयोध्यां प्रतियास्यसि ॥ ४५

महान्ति च निमित्तानि दिवि भूमौ च राघव ।
शुभानि तव पश्यामि सर्वाण्येवार्थसिद्धये ॥ ४६

अनुवाति शिवो वायुः सेनां मृदुहितः सुखः ।
पूर्णवल्गुस्वराश्चेमे प्रवदन्ति मृगद्विजाः ॥ ४७

प्रसन्नाश्च दिशः सर्वा विमलश्च दिवाकरः ।
उशनाश्च प्रसन्नार्चिरनु त्वां भार्गवो गतः ॥ ४८

ब्रह्मराशिर्विशुद्धश्च शुद्धाश्च परमर्षयः ।
अर्चिष्मन्तः प्रकाशन्ते ध्रुवं सर्वे प्रदक्षिणम् ॥ ४९

त्रिशङ्कुर्विमलो भाति राजर्षिः सपुरोहितः ।
पितामहवरोऽस्माकमिक्ष्वाकूणां महात्मनाम् ॥ ५०

विमले च प्रकाशेते विशाखे निरुपद्रवे ।
नक्षत्रं परमस्माकमिक्ष्वाकूणां महात्मनाम् ॥ ५१

नैर्ऋतं नैर्ऋतानां च नक्षत्रमतिपीड्यते ।
मूलो मूलवता स्पृष्टो धूप्यते धूमकेतुना ॥ ५२

सर्वं चैतद्विनाशाय राक्षसानामुपस्थितम् ।
काले कालगृहीतानां नक्षत्रग्रहपीडितम् ॥ ५३

प्रसन्नाः सुरसाश्चापो वनानि फलवन्ति च ।
प्रवान्त्यभ्यधिका गन्धा यथर्तुकुसुमा द्रुमाः ॥ ५४

व्यूढानि कपिसैन्यानि प्रकाशन्तेऽधिकं प्रभो ।
देवानामिव सैन्यानि सङ्ग्रामे तारकामये ॥ ५५

एवमार्य समीक्ष्यैतान् प्रीतो भवितुमर्हसि ।
इति भ्रातरमाश्वास्य हृष्टः सौमित्रिरब्रवीत् ॥ ५६

अथावृत्य महीं कृत्स्नां जगाम महती चमूः ।
ऋक्षवानरशार्दूलैर्नखदंष्ट्रायुधैर्वृता ॥ ५७

कराग्रैश्चरणाग्रैश्च वानरैरुत्थितं रजः ।
भीममन्तर्दधे लोकं निवार्य सवितुः प्रभाम् ॥ ५८

सपर्वतवनाकाशां दक्षिणां हरिवाहिनी ।
छादयन्ती ययौ भीमा द्यामिवाम्बुदसन्ततिः ॥ ५९

उत्तरन्त्यां तु सेनायां सततं बहुयोजनम् ।
नदीस्रोतांसि सर्वाणि सस्यन्दुर्विपरीतवत् ॥ ६०

सरांसि विमलाम्भांसि द्रुमाकीर्णांश्च पर्वतान् ।
समान्निम्नप्रदेशांश्च वनानि फलवन्ति च ॥ ६१

मध्येन च समन्ताच्च तिर्यक्चाधश्च साऽविशत् ।
समावृत्य महीं कृत्स्नां जगाम महती चमूः ॥ ६२

ते हृष्टमनसः सर्वे जग्मुर्मारुतरंहसः ।
हरयो राघवस्यार्थे समारोपितविक्रमाः ॥ ६३

हर्षवीर्यबलोद्रेकान् दर्शयन्तः परस्परम् ।
यौवनोत्सेकजान्दर्पान् विविधांश्चक्रुरध्वनि ॥ ६४

तत्र केचिद्द्रुतं जग्मुरुत्पेतुश्च तथा परे ।
केचित्किलकिलां चक्रुर्वानरा वनगोचराः ॥ ६५

प्रास्फोटयंश्च पुच्छानि सन्निजघ्नुः पदान्यपि ।
भुजान् विक्षिप्य शैलांश्च द्रुमानन्ये बभञ्जिरे ॥ ६६

आरोहन्तश्च शृङ्गाणि गिरीणां गिरिगोचराः ।
महानादान् विमुञ्चन्ति क्ष्वेलामन्ये प्रचक्रिरे ॥ ६७

ऊरुवेगैश्च ममृदुर्लताजालान्यनेकशः ।
जृम्भमाणाश्च विक्रान्ता विचिक्रीडुः शिलाद्रुमैः ॥ ६८

शतैः शतसहस्रैश्च कोटीभिश्च सहस्रशः ।
वानराणां सुघोराणां यूथैः परिवृता मही ॥ ६९

सा स्म याति दिवारात्रं महती हरिवाहिनी ।
हृष्टाः प्रमुदिताः सर्वे सुग्रीवेणाभिपालिताः ॥ ७०

वानरास्त्वरितं यान्ति सर्वे युद्धाभिनन्दिनः ।
मुमोक्षयिषवः सीतां मुहूर्तं क्वापि नासत ॥ ७१

ततः पादपसम्बाधं नानामृगसमायुतम् ।
सह्यपर्वतमासाद्य वानरास्ते समारुहन् ॥ ७२

काननानि विचित्राणि नदीप्रस्रवणानि च ।
पश्यन्नभिययौ रामः सह्यस्य मलयस्य च ॥ ७३

चम्पकांस्तिलकांश्चूतानशोकान्सिन्धुवारकान् ।
करवीरांश्च तिमिशान् भञ्जन्ति स्म प्लवङ्गमाः ॥ ७४

अङ्कोलांश्च करञ्जांश्च प्लक्षन्यग्रोधतिन्दुकान् ।
जम्बूरामलकान्नीपान् भञ्जन्ति स्म प्लवङ्गमाः ॥ ७५

प्रस्तरेषु च रम्येषु विविधाः काननद्रुमाः ।
वायुवेगप्रचलिताः पुष्पैरवकिरन्ति गाम् ॥ ७६

मारुतः सुखसंस्पर्शो वाति चन्दनशीतलः ।
षट्पदैरनुकूजद्भिर्वनेषु मधुगन्धिषु ॥ ७७

अधिकं शैलराजस्तु धातुभिः सुविभूषितः ।
धातुभ्यः प्रसृतो रेणुर्वायुवेगविघट्टितः ॥ ७८

सुमहद्वानरानीकं छादयामास सर्वतः ॥ ७९

गिरिप्रस्थेषु रम्येषु सर्वतः संप्रपुष्पिताः ।
केतक्यः सिन्धुवाराश्च वासन्त्यश्च मनोरमाः ॥ ८०

माधव्यो गन्धपूर्णाश्च कुन्दगुल्माश्च पुष्पिताः ।
चिरिबिल्वा मधूकाश्च वञ्जुला वकुलास्तथा ॥ ८१

स्फूर्जकास्तिलकाश्चैव नागवृक्षाश्च पुष्पिताः ।
चूताः पाटलयश्चैव कोविदाराश्च पुष्पिताः ॥ ८२

मुचुलिन्दार्जुनाश्चैव शिंशुपाः कुटजास्तथा ।
धवाः शाल्मलयश्चैव रक्ताः कुरवकास्तथा ॥ ८३

हिन्तालास्तिमिशाश्चैव चूर्णका नीपकास्तथा ।
नीलाशोकाश्च वरणा अङ्कोलाः पद्मकास्तथा ॥ ८४

प्लवमानैः प्लवङ्गैस्तु सर्वे पर्याकुलीकृताः ।
वाप्यस्तस्मिन् गिरौ शीताः पल्वलानि तथैव च ॥ ८५

चक्रवाकानुचरिताः कारण्डवनिषेविताः ।
प्लवैः क्रौञ्चैश्च सङ्कीर्णा वराहमृगसेविताः ॥ ८६

ऋक्षैस्तरक्षुभिः सिंहैः शार्दूलैश्च भयावहैः ।
व्यालैश्च बहुभिर्भीमैः सेव्यमानाः समन्ततः ॥ ८७

पद्मैः सौगन्धिकैः फुल्लैः कुमुदैश्चोत्पलैस्तथा ।
वारिजैर्विविधैः पुष्पै रम्यास्तत्र जलाशयाः ॥
तस्य सानुषु कूजन्ति नानाद्विजगणास्तथा ॥ ८८

स्नात्वा पीत्वोदकान्यत्र जलैः क्रीडन्ति वानराः ।
अन्योन्यं प्लावयन्ति स्म शैलमारुह्य वानराः ॥ ८९

फलान्यमृतकल्पानि मूलानि कुसुमानि च ।
बभञ्जुर्वानरास्तत्र पादपांस्तान् बलोत्कटाः ॥ ९०

द्रोणमात्रप्रमाणानि लम्बमानानि वानराः ।
ययुः पिबन्तो हृष्टास्ते मधूनि मधुपिङ्गलाः ॥ ९१

पादपानवभञ्जन्तो विकर्षन्तस्तथा लताः ।
विधमन्तो गिरिवरान् प्रययुः प्लवगर्षभाः ॥ ९२

वृक्षेभ्योऽन्ये तु कपयो नर्दन्तो मधुदर्पिताः ।
अन्ये वृक्षान् प्रपद्यन्ते प्रपतन्त्यपि चापरे ॥ ९३

बभूव वसुधा तैस्तु संपूर्णा हरिपुङ्गवैः ।
यथा कलमकेदारैः पक्वैरिव वसुन्धरा ॥ ९४

महेन्द्रमथ संप्राप्य रामो राजीवलोचनः ।
अध्यारोहन्महाबाहुः शिखरं द्रुमभूषितम् ॥ ९५

ततः शिखरमारुह्य रामो दशरथात्मजः ।
कूर्ममीनसमाकीर्णमपश्यत्सलिलाकरम् ॥ ९६

ते सह्यं समतिक्रम्य मलयं च महागिरिम् ।
आसेदुरानुपूर्व्येण समुद्रं भीमनिःस्वनम् ॥ ९७

अवरुह्य नगामाशु वेलावनमनुत्तमम् ।
रामो रमयतां श्रेष्ठः ससुग्रीवः सलक्ष्मणः ॥ ९८

अथ धौतोपलतलां तोयौघैः सहसोत्थितैः ।
वेलामासाद्य विपुलां रामो वचनमब्रवीत् ॥ ९९

एते वयमनुप्राप्ताः सुग्रीव वरुणालयम् ।
इहेदानीं विचिन्ता सा या नः पूर्वं समुत्थिता ॥ १००

अतः परमपारोऽयं सागरः सरितां पतिः ।
न चायमनुपायेन शक्यस्तरितुमर्णवः ॥ १०१

तदिहैव निवेशोऽस्तु मन्त्रः प्रस्तूयतामिह ।
यथेदं वानरबलं परं पारमवाप्नुयात् ॥ १०२

इतीव स महाबाहुः सीताहरणकर्शितः ।
रामः सागरमासाद्य वासमाज्ञापयत्तदा ॥ १०३

सर्वाः सेना निवेश्यन्तां वेलायां हरिपुङ्गवाः ।
संप्राप्तो मन्त्रकालो नः सागरस्येह लङ्घने ॥ १०४

स्वां स्वां सेनां समुत्सृज्य मा च कश्चित्कुतो व्रजेत् ।
गच्छन्तु वानराः शूरा ज्ञेयं छन्नं भयं च नः ॥ १०५

रामस्य वचनं श्रुत्वा सुग्रीवः सहलक्ष्मणः ।
सेनां न्यवेशयत्तीरे सागरस्य द्रुमायुते ॥ १०६

विरराज समीपस्थं सागरस्य तु तद्बलम् ।
मधुपाण्डुजलः श्रीमान् द्वितीय इव सागरः ॥ १०७

वेलावनमुपागम्य ततस्ते हरिपुङ्गवाः ।
विनिविष्टाः परं पारं काङ्क्षमाणा महोदधेः ॥ १०८

तेषां विविशमानानां सैन्यसन्नाहनिःस्वनः ।
अन्तर्धाय महानादमर्णवस्य प्रशुश्रुवे ॥ १०९

सा वानराणां ध्वजिनी सुग्रीवेणाभिपालिता ।
त्रिधा निविष्टा महती रामस्यार्थपराऽभवत् ॥ ११०

सा महार्णवमासाद्य हृष्टा वानरवाहिनी ।
वायुवेगसमाधूतं पश्यमाना महार्णवम् ॥ १११

दूरपारमसम्बाधं रक्षोगणनिषेवितम् ।
पश्यन्तो वरुणावासं निषेदुर्हरियूथपाः ॥ ११२

चण्डनक्रग्रहं घोरं क्षपादौ दिवसक्षये ।
हसन्तमिव फेनौघैर्नृत्यन्तमिव चोर्मिभिः ॥ ११३

चन्द्रोदयसमुद्धूतं प्रतिचन्द्रसमाकुलम् ॥ ११४

चण्डानिलमहाग्राहैः कीर्णं तिमितिमिङ्गिलैः ।
दीप्तभोगैरिवाकीर्णं भुजङ्गैर्भुजगालयम् ॥ ११५

अवगाढं महासत्त्वैर्नानाशैलसमाकुलम् ।
सुदुर्गं दुर्गमार्गं तमगाधमसुरालयम् ॥ ११६

मकरैर्नागभोगैश्च विगाढा वातलोलिताः ।
उत्पेतुश्च निपेतुश्च प्रवृद्धा जलराशयः ॥ ११७

अग्निचूर्णमिवाविद्धं भास्वराम्बु महोरगम् ।
सुरारिविषयं घोरं पातालविषयं सदा ॥ ११८

सागरं चाम्बरप्रख्यमम्बरं सागरोपमम् ।
सागरं चाम्बरं चेति निर्विशेषमदृश्यत ॥ ११९

संपृक्तं नभसा ह्यम्भः संपृक्तं च नभोऽम्भसा ।
तुल्यरूपे स्म दृश्येते तारारत्नसमाकुले ॥ १२०

समुत्पतितमेघस्य वीचिमालाकुलस्य च ।
विशेषो न द्वयोरासीत् सागरस्याम्बरस्य च ॥ १२१

अन्योन्यैराहताः सक्ताः सस्वरं भीमविक्रमैः ।
ऊर्मयः सिन्धुराजस्य महाभेर्य इवाहवे ॥ १२२

रत्नौघजलसन्नादं विषक्तमिव वायुना ।
उत्पतन्तमिव क्रुद्धं यादोगणसमाकुलम् ॥ १२३

ददृशुस्ते महात्मानो वाताहतजलाशयम् ।
अनिलोद्धूतमाकाशे प्रवल्गन्तमिवोर्मिभिः ॥ १२४

ततो विस्मयमापन्ना ददृशुर्हरयः स्थिताः ।
भ्रान्तोर्मिजलसन्नादं प्रलोलमिव सागरम् ॥ १२५

इति चतुर्थः सर्गः ॥



## पञ्चमः सर्गः ॥

सा तु नीलेन विधिवत् स्वारक्षा सुसमाहिता ।
सागरस्योत्तरे तीरे साधु सेना निवेशिता ॥ १

मैन्दश्च द्विविदश्चोभौ तत्र वानरपुङ्गवौ ।
विचेरतुश्च तां सेनां रक्षार्थं सर्वतो दिशम् ॥ २

निविष्टायां तु सेनायां तीरे नदनदीपतेः ।
पार्श्वस्थं लक्ष्मणं दृष्ट्वा रामो वचनमब्रवीत् ॥ ३

शोकश्च किल कालेन गच्छता ह्यपगच्छति ।
मम चापश्यतः कान्तामहन्यहनि वर्धते ॥ ४

न मे दुःखं प्रिया दूरे न मे दुःखं हृतेति च ।
एतदेवानुशोचामि वयोऽस्या ह्यतिवर्तते ॥ ५

वाहि वात यतः कान्ता तां स्पृष्ट्वा मामपि स्पृश ।
त्वयि मे गात्रसंस्पर्शश्चन्द्रे दृष्टिसमागमः ॥ ६

तन्मे दहति गात्राणि विषं पीतमिवाशये ।
हा नाथेति प्रिया सा मां ह्रियमाणा यदब्रवीत् ॥ ७

तद्वियोगेन्धनवता तच्चिन्ताविपुलार्चिषा ।
रात्रिंदिवं शरीरं मे दह्यते मदनाग्निना ॥ ८

अवगाह्यार्णवं स्वप्स्ये सौमित्रे भवता विना ।
कथञ्चित्प्रज्वलन्कामः न मां सुप्तं जले दहेत् ॥ ९

बह्वेतत्कामयानस्य शक्यमेतेन जीवितुम् ।
यदहं सा च वामोरूरेकां धरणिमाश्रितौ ॥ १०

केदारस्येव केदारः सोदकस्य निरूदकः ।
उपस्नेहेन जीवामि जीवन्तीं यच्छृणोमि ताम् ॥ ११

हारोऽपि नार्पितः कण्ठे स्पर्शसंरोधभीरुणा ।
भुजयोरन्तरे जाताः पर्वताः सरितो द्रुमाः ॥ १२

कदा नु खलु सुश्रोणीं शतपत्रायतेक्षणाम् ।
विजित्य शत्रून् द्रक्ष्यामि सीतां स्फीतामिव श्रियम् ॥

कदा नु चारुबिम्बोष्ठं तस्याः पद्ममिवाननम् ।
ईषदुन्नम्य पास्यामि रसायनमिवातुरः ॥ १४

तौ तस्याः सदृशौ पीनौ स्तनौ तालफलोपमौ ।
कदा नु खलु सोत्कम्पौ हसन्त्या मां भजिष्यतः ॥ १५

सा नूनमसितापाङ्गी रक्षोमध्यगता सती ।
मन्नाथा नाथहीनेव त्रातारं नाधिगच्छति ॥ १६

कथं जनकराजस्य दुहिता परमप्रिया ।
राक्षसीमध्यगा शेते स्नुषा दशरथस्य च ॥ १७

कदा विक्षोभ्य रक्षांसि सा विधूयोत्पतिष्यति ।
विधूय जलदान्नीलान् शशिलेखा शरत्स्विव ॥ १८

स्वभावतनुका नूनं शोकेनानशनेन च ।
भूयस्तनुतरा सीता देशकालविपर्ययात् ॥ १९

कदा नु राक्षसेन्द्रस्य निधायोरसि सायकान् ।
सीतां प्रत्याहरिष्यामि शोकमुत्सृज्य मानसम् ॥ २०

कदा नु खलु मां साध्वी सीता सुरसुतोपमा ।
सोत्कण्ठा कण्ठमालम्ब्य मोक्ष्यत्यानन्दजं पयः ॥ २१

कदा शोकमिमं घोरं मैथिलीविप्रयोगजम् ।
सहसा विप्रमोक्ष्यामि वासः शुक्लेतरं यथा ॥ २२

एवं विलपतस्तस्य तत्र रामस्य धीमतः ।
दिनक्षयान्मन्दवपुर्भास्करोऽस्तमुपागमत् ॥ २३

आश्वासितो लक्ष्मणेन रामः सन्ध्यामुपाविशत् ।
स्मरन्कमलपत्राक्षीं सीतां शोकाकुलीकृतः ॥ २४

इति पञ्चमः सर्गः ॥



## षष्ठः सर्गः ॥

लङ्कायां तु कृतं कर्म घोरं दृष्ट्वा भयावहम् ।
राक्षसेन्द्रो हनुमता शक्रेणेव महात्मना ॥ १

अब्रवीद्राक्षसान्सर्वान् ह्रिया किञ्चिदवाङ्मुखः ।
धर्षिता च प्रविष्टा च लङ्का दुष्प्रसहा पुरी ।
तेन वानरमात्रेण दृष्टा सीता च जानकी ॥ २

प्रासादो धर्षितश्चैत्यः प्रवरा राक्षसा हताः ।
आकुला च पुरी लङ्का सर्वा हनुमता कृता ॥ ३

किं करिष्यामि भद्रं वः किं वा युक्तमनन्तरम् ।
उच्यतां नः समर्थं यत् कृतं च सुकृतं भवेत् ॥ ४

मन्त्रमूलं हि विजयं प्राहुरार्या मनस्विनः ।
तस्माद्वै रोचये मन्त्रं रामं प्रति महाबलाः ॥ ५

त्रिविधाः पुरुषा लोके उत्तमाधममध्यमाः ।
तेषां तु समवेतानां गुणदोषं वदाम्यहम् ॥ ६

मन्त्रिभिर्हितसंयुक्तैः समर्थैर्मन्त्रनिर्णये ।
मित्रैर्वापि समानार्थैर्बान्धवैर्वा समाहितैः ॥ ७

सहितो मन्त्रयित्वा यः कर्मारम्भान्प्रवर्तयेत् ।
दैवे च कुरुते यत्नं तमाहुः पुरुषोत्तमम् ॥ ८

एकोऽर्थं विमृशेदेको धर्मे प्रकुरुते मनः ।
एकः कार्याणि कुरुते तमाहुर्मध्यमं नरम् ॥ ९

गुणदोषावनिश्चित्य त्यक्त्वा दैवव्यपाश्रयम् ।
करिष्यामीति यः कार्यमुपेक्षेत्स नराधमः ॥ १०

यथेमे पुरुषा नित्यमुत्तमाधममध्यमाः ।
एवं मन्त्राश्च विज्ञेया उत्तमाधममध्यमाः ॥ ११

ऐकमत्यमुपागम्य शास्त्रदृष्टेन चक्षुषा ।
मन्त्रिणो यत्र निरतास्तमाहुर्मन्त्रमुत्तमम् ॥ १२

बह्वयोऽपि मतयो गत्वा मन्त्रिणामर्थनिर्णये ।
पुनर्यत्रैकतां प्राप्ताः स मन्त्रो मध्यमः स्मृतः ॥ १३

अन्योन्यं मतिमास्थाय यत्र संप्रतिभाष्यते ।
न चैकमत्ये श्रेयोऽस्ति मन्त्रः सोऽधम उच्यते ॥ १४

तस्मात्सुमन्त्रितं साधु भवन्तो मतिसत्तमाः ।
कार्यं संप्रतिपद्यन्तामेतत्कृत्यतरं मम ॥ १५

वानराणां हि वीराणां सहस्रैः परिवारितः ।
रामोऽभ्येति पुरीं लङ्कामस्माकमुपरोधकः ॥ १६

तरिष्यति च सुव्यक्तं राघवः सागरं सुखम् ।
तरसा युक्तरूपेण सानुजः सबलानुगः ॥ १७

समुद्रमुच्छोषयति वीर्येणान्यत्करोति वा ॥ १८

तस्मिन्नेवङ्गते कार्ये विरुद्धे वानरैः सह ।
हितं पुरे च सैन्ये च सर्वं संमन्त्र्यतां मम ॥ १९

इति षष्ठः सर्गः ॥



# सप्तमः सर्गः ॥

इत्युक्ता राक्षसेन्द्रेण राक्षसास्ते महाबलाः ।
ऊचुः प्राञ्जलयः सर्वे रावणं राक्षसेश्वरम् ॥ १

द्विषत्पक्षमविज्ञाय नीतिबाह्यास्त्वबुद्धयः ।
अविज्ञाय स्वपक्षं च राजानं भीषयन्ति हि ॥ २

राजन् परिघशक्त्यृष्टिशूलपट्टिससंकुलम् ।
सुमहन्नो बलं कस्माद्विषादं भजते भवान् ॥
त्वया भोगवतीं गत्वा निर्जिताः पन्नगा युधि ॥ ३

कैलासशिखरावासी यक्षैर्बहुभिरावृतः ।
सुमहत्कदनं कृत्वा वश्यस्ते धनदः कृतः ॥ ४

स महेश्वरसख्येन श्लाघमानस्त्वया विभो ।
निर्जितः समरे रोषाल्लोकपालो महाबलः ॥ ५

विनिपात्य च यक्षौघन्विक्षोभ्य विनिगृह्य च ।
त्वया कैलासशिखराद्विमानमिदमाहृतम् ॥ ६

मयेन दानवेन्द्रेण त्वद्भयात्सख्यमिच्छता ।
दुहिता तव भार्यार्थे दत्ता राक्षसपुङ्गव ॥ ७

दानवेन्द्रो मधुर्नाम वीर्योत्सिक्तो दुरासदः ।
विगृह्य वशमानीतः कुम्भीनस्याः सुखावहः ॥ ८

निर्जितास्ते महाबाहो नागा गत्वा रसातलम् ।
वासुकिस्तक्षकः शङ्खो जटी च वशमाहृताः ॥ ९

अक्षया बलवन्तश्च शूरा लब्धवराः पुनः ।
त्वया संवत्सरं युद्ध्वा समरे दानवा विभो ॥ १०

स्वबलं समुपाश्रित्य नीता वशमरिन्दम ।
मायाश्चाधिगतास्तत्र बहवो राक्षसाधिप ॥ ११

शूराश्च बलवन्तश्च वरुणस्य सुता रणे ।
निर्जितास्ते महाराज चतुर्विधबलानुगाः ॥ १२

मृत्युदण्डमहाग्राहं शाल्मलिद्रुममण्डितम् ।
कालपाशमहावीचिं यमकिङ्करपन्नगम् ॥ १३

अवगाह्य त्वया राजन् यमस्य बलसागरम् ।
जयश्च विपुलः प्राप्तो मृत्युश्च प्रतिषेधितः ॥ १४

सुयुद्धेन च ते सर्वे लोकास्तत्र सुतोषिताः ॥ १५

क्षत्रियैर्बहुभिर्वीरैः शक्रतुल्यपराक्रमैः ।
आसीद्वसुमती पूर्णा महद्भिरिव पादपैः ॥ १६

तेषां वीर्यगुणोत्साहैर्न समो राघवो रणे ।
प्रसह्य ते त्वया राजन् हताः परमदुर्जयाः ॥ १७

तिष्ठतु त्वं महाराज निदेशात्तव वानरान् ।
अयमेको महाबाहुरिन्द्रजित्क्षपयिष्यति ॥ १८

अनेन हि महाराज माहेश्वरमनुत्तमम् ।
इष्ट्वा यज्ञं वरो लब्धो लोके परमदुर्लभः ॥ १९

शक्तितोमरमीनं च विनिकीर्णान्त्रशैवलम् ।
गजकच्छपसंबाधमश्वमण्डूकसंकुलम् ॥ २०

रुद्रादित्यमहाग्राहं मरुद्वसुमहोरगम् ।
रथाश्वगजतोयौघं पदातिपुलिनं महत् ॥ २१

अनेन हि समासाद्य देवानां बलसागरम् ।
गृहीतो देवराजश्च लङ्कां चापि प्रवेशितः ॥ २२

पितामहनियोगाच्च मुक्तः शम्बरवृत्रहा ।
गतस्त्रिविष्टपं राजन् सर्वदेवनमस्कृतः ॥ २३

तमेव त्वं महाराज विसृजेन्द्रजितं सुतम् ।
यावद्वानरसेनां तां सरामां नयति क्षयम् ॥ २४

राजन्नापदयुक्तेयमागता प्राकृताज्जनात् ।
हृदि नैव त्वया कार्या त्वं वधिष्यसि राघवम् ॥ २५

इति सप्तमः सर्गः ॥



## अष्टमः सर्गः ॥

ततो नीलाम्बुदनिभः प्रहस्तो नाम राक्षसः ।
अब्रवीत्प्राञ्जलिर्वाक्यं शूरः सेनापतिस्तदा ॥ १

देवदानवगन्धर्वाः पिशाचपतगोरगाः ।
न त्वां धर्षयितुं शक्ताः किं पुनर्वानरा रणे ॥ २

सर्वे प्रमत्ता विश्वस्ता वञ्चिताः स्म हनूमता ।
न हि मे जीवतो गच्छेज्जीवन्स वनगोचरः ॥ ३

सर्वां सागरपर्यन्तां सशैलवनकाननाम् ।
करोम्यवानरां भूमिमाज्ञापयतु मां भवान् ॥ ४

रक्षां चैव विधास्यामि वानराद्रजनीचर ।
नागमिष्यति ते दुःखं किञ्चिदात्मापराधजम् ॥ ५

अब्रवीत्तु सुसंक्रुद्धो दुर्मुखो नाम राक्षसः ।
इदं न क्षमणीयं हि सर्वेषां नः प्रधर्षणम् ॥ ६

अयं परिभवो भूयः पुरस्यान्तःपुरस्य च ।
श्रीमतो राक्षसेन्द्रस्य वानरेण प्रधर्षणम् ॥ ७

अस्मिन्मुहूर्ते हत्वैको निवर्तिष्यामि वानरान् ।
प्रविष्टान्सागरं भीममम्बरं वा रसातलम् ॥ ८

ततोऽब्रवीत्सुसंक्रुद्धो वज्रदंष्ट्रो महाबलः ।
प्रगृह्य परिघं घोरं मांसशोणितरूषितम् ॥ ९

किं वो हनुमता कार्यं कृपणेन तपस्विना ।
रामे तिष्ठति दुर्धर्षे सुग्रीवे सहलक्ष्मणे ॥ १०

अद्य रामं ससुग्रीवं परिघेण सलक्ष्मणम् ।
आगमिष्यामि हत्वैको विक्षोभ्य हरिवाहिनीम् ॥ ११

इदं ममापरं वाक्यं शृणु राजन्यदीच्छसि ।
उपायकुशलो ह्येव जयेच्छत्रूनतन्द्रितः ॥ १२

कामरूपधराः शूराः सुभीमा भीमविक्रमाः ।
राक्षसानां सहस्राणि राक्षसाधिप निश्चिताः ॥ १३

काकुत्स्थमुपसङ्गम्य बिभ्रतो मानुषं वपुः ।
सर्वे ह्यसंभ्रमा भूत्वा ब्रुवन्तु रघुसत्तमम् ॥ १४

प्रेषिता भरतेन स्म तव भ्रात्रा यवीयसा ।
स हि सेनां समुत्थाप्य क्षिप्रमेवोपयास्यति ॥ १५

ततो वयमितस्तूर्णं शूलशक्तिगदाधराः ।
चापबाणासिहस्ताश्च त्वरितास्तव यामहे ॥ १६

आकाशे गणशः स्थित्वा हत्वा तां हरिवाहिनीम् ।
अश्मवर्षमहावृष्ट्या प्रापयाम यमक्षयम् ॥ १७

एवं चेदुपसर्पेतामनयं रामलक्ष्मणौ ।
अवश्यमपनीतेन जहतामेव जीवितम् ॥ १८

कौम्भकर्णिस्ततो वीरो निकुम्भो नाम वीर्यवान् ।
अब्रवीत्परमक्रुद्धो रावणं लोकरावणम् ॥ १९

सर्वे भवन्तस्तिष्ठन्तु महाराजेन सङ्गताः ।
अहमेको हनिष्यामि राघवं सहलक्ष्मणम् ॥
सुग्रीवं सहनूमन्तं सर्वानेव च वानरान् ॥ २०

ततो वज्रहनुर्नाम राक्षसः पर्वतोपमः ।
क्रुद्धः परिलिहन्वक्त्रं जिह्वया वाक्यमब्रवीत् ॥ २१

स्वैरं कुर्वन्तु कार्याणि भवन्तो विगतज्वराः ।
एकोऽहं भक्षयिष्यामि तां सर्वां हरिवाहिनीम् ॥ २२

स्वस्थाः क्रीडन्तु निश्चिन्ताः पिबन्तो मधुवारुणीम् ॥

अहमेको हनिष्यामि सुग्रीवं सहलक्ष्मणम् ।
साङ्गदं सहनूमन्तं रामं च रणकुञ्जरम् ॥ २४

इति अष्टमः सर्गः ॥



## नवमः सर्गः ॥

ततो निकुम्भकुम्भौ च सूर्यशत्रुर्महाबलः ।
सुप्तघ्नो यज्ञकोपश्च महापार्श्वो महोदरः ॥ १

अग्निकेतुश्च दुर्धर्षो रश्मिकेतुश्च वीर्यवान् ।
इन्द्रजिच्च महातेजा बलवान्रावणात्मजः ॥ २

प्रहस्तोऽथ विरूपाक्षो वज्रदंष्ट्रो महाबलः ।
धूम्राक्षः सिंहकेतुश्च दुर्मुखश्चैव राक्षसः ॥ ३

परिघान्पट्टसान्प्रासान् शक्तिशूलपरश्वधान् ।
चापानि च सबाणानि खड्गांश्च विपुलाञ्शितान् ॥ ४

प्रगृह्य परमक्रुद्धाः समुत्पत्य च राक्षसाः ।
अब्रुवन्रावणं सर्वे प्रदीप्ता इव तेजसा ॥ ५

अद्य रामं वधिष्यामः सुग्रीवं च सलक्ष्मणम् ।
कृपणं च हनूमन्तं लङ्का येन प्रधर्षिता ॥ ६

तान्गृहीतायुधान्सर्वान् वारयित्वा विभीषणः ।
अब्रवीत्प्राञ्जलिर्वाक्यं पुनः प्रत्युपवेश्य तान् ॥ ७

अप्युपायैस्त्रिभिस्तात योऽर्थः प्राप्तुं न शक्यते ।
तस्य विक्रमकालांस्तान् युक्तानाहुर्मनीषिणः ॥ ८

प्रमत्तेष्वभियुक्तेषु दैवेन प्रहतेषु च ।
विक्रमास्तात सिध्यन्ति परीक्ष्य विधिना कृताः ॥ ९

अप्रमत्तं कथं तं तु विजिगीषुं बले स्थितम् ।
जितरोषं दुराधर्षं प्रधर्षयितुमिच्छथ ॥ १०

समुद्रं लङ्घयित्वा तु घोरं नदनदीपतिम् ।
कृतं हनुमता कर्म दुष्करं तर्कयेत वा ॥ ११

बलान्यपरिमेयानि वीर्याणि च निशाचराः ।
परेषां सहसाऽवज्ञा न कर्तव्या कथञ्चन ॥ १२

किं च राक्षसराजस्य रामेणापकृतं पुरा ।
आजहार जनस्थानाद्यस्य भार्यां यशस्विनीम् ॥ १३

खरो यद्यतिवृत्तस्तु रामेण निहतो रणे ।
अवश्यं प्राणिनां प्राणा रक्षितव्या यथाबलम् ॥ १४

अयशस्यमनायुष्यं परदाराभिमर्शनम् ।
अर्थक्षयकरं घोरं पापस्य च पुनर्भवम् ॥ १५

एतन्निमित्तं वैदेह्या भयं नः सुमहद्भवेत् ।
आहृता सा परित्याज्या कलहार्थे कृतेन किम् ॥ १६

न नः क्षमं वीर्यवता तेन धर्मानुवर्तिना ।
वैरं निरर्थकं कर्तुं दीयतामस्य मैथिली ॥ १७

यावन्न सगजां साश्वां बहुरत्नसमाकुलाम् ।
पुरीं दारयते बाणैर्दीयतामस्य मैथिली ॥ १८

यावत्सुघोरा महती दुर्धर्षा हरिवाहिनी ।
नावस्कन्दति नो लङ्कां तावत्सीता प्रदीयताम् ॥ १९

विनश्येद्धि पुरी लङ्का शूराः सर्वे च राक्षसाः ।
रामस्य दयिता पत्नी स्वयं यदि न दीयते ॥ २०

प्रसादये त्वां बन्धुत्वात् कुरुष्व वचनं मम ।
हितं तथ्यं त्वहं ब्रूमि दीयतामस्य मैथिली ॥ २१

पुरा शरत्सूर्यमरीचिसन्निभान्
नवाग्रपुङ्खान्सुदृढान्नृपात्मजः ।
सृजत्यमोघान्विशिखान्वधाय ते
प्रदीयतां दाशरथाय मैथिली ॥ २२

त्यजस्व कोपं कुलधर्मनाशनं
भजस्व धर्मं रतिकीर्तिवर्धनम् ।
प्रसीद जीवेम सपुत्रबान्धवाः
प्रदीयतां दाशरथाय मैथिली ॥ २३

विभीषणवचः श्रुत्वा रावणो राक्षसेश्वरः ।
विसर्जयित्वा तान्सर्वान् प्रविवेश स्वकं गृहम् ॥ २४

इति नवमः सर्गः ॥



## दशमः सर्गः ॥

ततः प्रत्युषसि प्राप्ते प्राप्तधर्मार्थनिश्चयः ।
राक्षसाधिपतेर्वेश्म भीमकर्मा विभीषणः ॥ १

शैलाभ्रचयसङ्काशं शैलशृङ्गमिवोन्नतम् ।
सुविभक्तमहाकक्ष्यं महाजनपरिग्रहम् ॥ २

मतिमद्भिर्महामात्रैरनुरक्तैरधिष्ठितम् ।
राक्षसैश्चाप्तपर्याप्तैः सर्वतः परिरक्षितम् ॥ ३

मत्तमातङ्गनिःश्वासैर्व्याकुलीकृतमारुतम् ।
शङ्खघोषमहाघोषं तूर्यसन्नादनादितम् ॥ ४

प्रमदाजनसंबाधं प्रजल्पितमहापथम् ।
तप्तकाञ्चननिर्यूहं भूषणोत्तमभूषितम् ॥ ५

गन्धर्वाणामिवावासमालयं मरुतामिव ।
रत्नसञ्चयसंबाधं भवनं भोगिनामिव ॥ ६

तं महाभ्रमिवादित्यस्तेजोविस्तृतरश्मिमान् ।
अग्रजस्यालयं वीरः प्रविवेश महाद्युतिः ॥ ७

पुण्यान्पुण्याहघोषांश्च वेदविद्भिरुदाहृतान् ।
शुश्राव सुमहातेजा भ्रातुर्विजयसंश्रितान् ॥ ८

पूजितान्दधिपात्रैश्च सर्पिर्भिः सुमनोक्षतैः ।
मन्त्रवेदविदो विप्रान् ददर्श सुमहाबलः ॥ ९

संपूज्यमानो रक्षोभिर्दीप्यमानः स्वतेजसा ।
आसनस्थं महाबाहुर्ववन्दे धनदानुजम् ॥ १०

स राजदृष्टिसम्पन्नमासनं हेमभूषितम् ।
जगाम समुदाचारं प्रयुज्याचारकोविदः ॥ ११

स रावणं महात्मानं विजने मन्त्रिसन्निधौ ।
उवाच हितमत्यर्थं वचनं हेतुनिश्चितम् ॥ १२

प्रसाद्य भ्रातरं ज्येष्ठं सान्त्वेनोपस्थितक्रमः ।
देशकालार्थसंवादी दृष्टलोकपरावरः ॥ १३

यदा प्रभृति वैदेही संप्राप्तेह परन्तप ।
तदा प्रभृति दृश्यन्ते निमित्तान्यशुभानि नः ॥ १४

सस्फुलिङ्गः सधूमार्चिः सधूमकलुषोदयः ।
मन्त्रसंधुक्षितोऽप्यग्निर्न सम्यगभिवर्धते ॥ १५

अग्निष्ठेष्वग्निशालासु तथा ब्रह्मस्थलीषु च ।
सरीसृपाणि दृश्यन्ते हव्येषु च पिपीलिकाः ॥ १६

गवां पयांसि स्कन्नानि विमदा वीरकुञ्जराः ।
दीनमश्वाः प्रहेषन्ते न च ग्रासाभिनन्दिनः ॥ १७

खरोष्ट्राश्वतरा राजन् भिन्नरोमाः स्रवन्ति नः ।
न स्वभावे च तिष्ठन्ते विधानैरपि चिन्तिताः ॥ १८

वायसाः सङ्घशः क्रूरा व्याहरन्ति समन्ततः ।
समवेताश्च दृश्यन्ते विमानाग्रेषु सङ्घशः ॥ १९

गृध्राश्च परिलीयन्ते पुरीमुपरि पिण्डिताः ।
उपपन्नाश्च सन्ध्ये द्वे व्याहरन्त्यशिवं शिवाः ॥ २०

क्रव्यादानां मृगाणां च पुरद्वारेषु सङ्घशः ।
श्रूयन्ते विपुला घोषाः सविस्फूर्जितनिःस्वनाः ॥ २१

तदेवं प्रस्तुते कार्ये प्रायश्चित्तमिदं क्षमम् ।
रोचते यदि वैदेही राघवाय प्रदीयताम् ॥ २२

इदं च यदि वा मोहाल्लोभाद्वा व्याहृतं मया ।
तत्रापि च महाराज न दोषं कर्तुमर्हसि ॥ २३

अयं हि दोषः सर्वस्य जनस्यास्योपलक्ष्यते ।
रक्षसां राक्षसीनां च पुरस्यान्तःपुरस्य च ॥ २४

प्रापणे चास्य मन्त्रस्य निवृत्ताः सर्वमन्त्रिणः ।
अवश्यं च मया वाच्यं यद्दृष्टमपि वा श्रुतम् ॥
सम्प्रधार्य यथान्यायं तद्भवान् कर्तुमर्हति ॥ २५

इति स्म मन्त्रिणां मध्ये भ्राता भ्रातरमूचिवान् ।
रावणं रक्षसां श्रेष्ठं पथ्यमेतद्विभीषणः ॥ २६

हितं महार्थं मृदु हेतुसंहितं
व्यतीतकालायतिसम्प्रतिक्षमम् ।
निशम्य तद्वाक्यमुपस्थितज्वरः
प्रसङ्गवानुत्तरमेतदब्रवीत् ॥ २७

भयं न पश्यामि कुतश्चिदप्यहं
न राघवः प्राप्स्यति जातु मैथिलीम् ।
सुरैः सहेन्द्रैरपि सङ्गतः कथं
ममाग्रतः स्थास्यति लक्ष्मणाग्रजः ॥ २८

इतीदमुक्त्वा सुरसैन्यनाशनो
महाबलः संयति चण्डविक्रमः ।
दशाननो भ्रातरमाप्तवादिनं
विसर्जयामास तदा विभीषणम् ॥ २९

इति दशमः सर्गः ॥



# एकादशः सर्गः ॥

स बभूव कृशो राजा मैथिलीकाममोहितः ।
असंमानाच्च सुहृदां पापः पापेन कर्मणा ॥ १

अतीतसमये काले तस्मिन् वै युधि रावणः ।
अमात्यैश्च सुहृद्भिश्च प्राप्तकालममन्यत ॥ २

स हेमजालविततं मणिविद्रुमभूषितम् ।
उपगम्य विनीताश्वमारुरोह महारथम् ॥ ३

तमास्थाय रथश्रेष्ठं महामेघसमस्वनम् ।
प्रययौ राक्षसश्रेष्ठो दशग्रीवः सभां प्रति ॥ ४

असिचर्मधरा योधाः सर्वायुधधरास्ततः ।
राक्षसा राक्षसेन्द्रस्य पुरस्तात्संप्रतस्थिरे ॥ ५

नानाविकृतवेषाश्च नानाभूषणभूषिताः ।
पार्श्वतः पृष्ठतश्चैनं परिवार्य ययुस्तदा ॥ ६

रथैश्चातिरथाः शीघ्रं मत्तैश्च वरवारणैः ।
अनुत्पेतुर्दशग्रीवमाक्रीडद्भिश्च वाजिभिः ॥ ७

गदापरिघहस्ताश्च शक्तितोमरपाणयः ।
परश्वधधराश्चान्ये तथान्ये शूलपाणयः ॥ ८

ततस्तूर्यसहस्राणां सञ्जज्ञे निस्वनो महान् ।
तुमुलः शङ्खशब्दश्च सभां गच्छति रावणे ॥ ९

स नेमिघोषेण महान् सहसाभिविनादयन् ।
राजमार्गं श्रिया जुष्टं प्रतिपेदे महारथः ॥ १०

विमलं चातपत्राणं प्रगृहीतमशोभत ।
पाण्डरं राक्षसेन्द्रस्य पूर्णस्ताराधिपो यथा ॥ ११

हेममञ्जरिगर्भे च शुद्धस्फटिकविग्रहे ।
चामरव्यजने चास्य रेजतुः सव्यदक्षिणे ॥ १२

ते कृताञ्जलयः सर्वे रथस्थं पृथिवीस्थिताः ।
राक्षसा राक्षसश्रेष्ठं शिरोभिस्तं ववन्दिरे ॥ १३

राक्षसैः स्तूयमानस्तु जयाशीर्भिररिन्दमः ।
आससाद महातेजाः सभां विरचितां शुभाम् ॥ १४

सुवर्णरजतास्तीर्णां विशुद्धस्फटिकान्तराम् ।
विराजमानो वपुषा रुक्मपट्टोत्तरच्छदाम् ॥ १५

तां पिशाचशतैः षड्भिरभिगुप्तां सदा शुभाम् ।
प्रविवेश महातेजाः सुकृतां विश्वकर्मणा ॥ १६

तस्यां स वैडूर्यमयं प्रियकाजिनसंवृतम् ।
महत्सोपाश्रयं भेजे रावणः परमासनम् ॥ १७

ततः शशासेश्वरवद्दूताँल्लघुपराक्रमान् ।
समानयत मे क्षिप्रमिहैतान् राक्षसानिति ॥ १८

कृत्यमस्ति महज्जातं समर्थ्यमिह नो महत् ।
राक्षसास्तद्वचः श्रुत्वा लङ्कायां परिचक्रमुः ॥ १९

अनुगेहमवस्थाय विहारशयनेषु च ।
उद्यानेषु च रक्षांसि चोदयन्तो ह्यभीतवत् ॥ २०

ते रथान् रुचिरानेके दृप्तानेके पृथग्घयान् ।
नागानेकेऽधिरुरुहुर्जग्मुश्चैके पदातयः ॥ २१

सा पुरी परमाकीर्णा रथकुञ्जरवाजिभिः ।
सम्पतद्भिर्विरुरुचे गरुत्मद्भिरिवाम्बरम् ॥ २२

ते वाहनान्यवस्थाप्य यानानि विविधानि च ।
सभां पद्भिः प्रविविशुः सिंहा गिरिगुहामिव ॥ २३

राज्ञः पादौ गृहीत्वा तु राज्ञा ते प्रतिपूजिताः ।
पीठेष्वन्ये बृसीष्वन्ये भूमौ केचिदुपाविशन् ॥ २४

ते समेत्य सभायां वै राक्षसा राजशासनात् ।
यथार्हमुपतस्थुस्ते रावणं राक्षसाधिपम् ॥ २५

मन्त्रिणश्च यथामुख्या निश्चितार्थेषु पण्डिताः ।
अमात्याश्च गुणोपेताः सर्वज्ञा बुद्धिदर्शनाः ॥ २६

समेयुस्तत्र शतशः शूराश्च बहवस्तदा ॥ २७

सभायां हेमवर्णायां सर्वार्थस्य सुखाय वै ।
रम्यायां राक्षसेन्द्रस्य समेयुस्तत्र सङ्घशः ॥ २८

ततो महात्मा विपुलं सुयुग्यं
वरं रथं हेमविचित्रिताङ्गम् ।
शुभं समास्थाय ययौ तरस्वी
विभीषणः संसदमग्रजस्य ॥ २९

स पूर्वजायावरजः शशंस
नामाथ पश्चाच्चरणौ ववन्दे ।
शुकः प्रहस्तश्च तथैव तेभ्यो
ददौ यथार्हं पृथगासनानि ॥ ३०

सुवर्णनानामणिभूषणानां
सुवाससां संसदि राक्षसानाम् ।
तेषां परार्ध्यागरुचन्दनानां
स्रजश्च गन्धाः प्रववुः समन्तात् ॥ ३१

न चुक्रुशुर्नानृतमाह कश्चित्
सभासदो नैव जजल्पुरुच्चैः ।
संसिद्धार्थाः सर्व एवोग्रवीर्याः
भर्तुः सर्वे ददृशुश्चाननं ते ॥ ३२

स रावणः शस्त्रभृतां मनस्विनां
महाबलानां समितौ मनस्वी ।
तस्यां सभायां प्रभया चकाशे
मध्ये वसूनामिव वज्रहस्तः ॥ ३३

इति एकादशः सर्गः ॥



## द्वादशः सर्गः ॥

स तां परिषदं कृत्स्नां समीक्ष्य समितिञ्जयः ।
प्रचोदयामास तदा प्रहस्तं वाहिनीपतिम् ॥ १

सेनापते यथा ते स्युः कृतविद्याश्चतुर्विधाः ।
योधा नगररक्षायां तथा व्यादेष्टुमर्हसि ॥ २

स प्रहस्तः प्रणीतात्मा चिकीर्षन् राजशासनम् ।
विनिक्षिप्य बलं सर्वं बहिरन्तश्च मन्दिरे ॥ ३

ततो विनिक्षिप्य बलं पृथङ् नगरगुप्तये ।
प्रहस्तः प्रमुखे राज्ञो निषसाद जगाद च ॥ ४

निहितं बहिरन्तश्च बलं बलवतस्तव ।
कुरुष्वाविमनाः क्षिप्रं यदभिप्रेतमस्ति ते ॥ ५

प्रहस्तवचनं श्रुत्वा राजा राज्यहिते रतः ।
सुखेप्सुः सुहृदां मध्ये व्याजहार स रावणः ॥ ६

प्रियाप्रिये सुखे दुःखे लाभालाभे हिताहिते ।
धर्मकामार्थकृच्छ्रेषु यूयमर्हथ वेदितुम् ॥ ७

सर्वकृत्यानि युष्माभिः समारब्धानि सर्वदा ।
मन्त्रकर्मनियुक्तानि न जातु विफलानि मे ॥ ८

स सोमग्रहनक्षत्रैर्मरुद्भिरिव वासवः ।
भवद्भिरहमत्यर्थं वृतः श्रियमवाप्नुयाम् ॥ ९

अहं तु खलु सर्वान् वः समर्थयितुमुद्यतः ।
कुम्भकर्णस्य तु स्वप्नान्नेममर्थमचोदयम् ॥ १०

अयं हि सुप्तः षण्मासान् कुम्भकर्णो महाबलः ।
सर्वशस्त्रभृतां मुख्यः स इदानीमुपस्थितः ॥ ११

इयं च दण्डकारण्याद्रामस्य महिषी प्रिया ।
रक्षोभिश्चरितोद्देशादानीता जनकात्मजा ॥ १२

सा मे न शय्यामारोढुमिच्छत्यलसगामिनी ।
त्रिषु लोकेषु चान्या मे न सीतासदृशी मता ॥ १३

तनुमध्या पृथुश्रोणी शारदेन्दुनिभानना ।
हेमबिम्बनिभा सौम्या मायेव मयनिर्मिता ॥ १४

सुलोहिततलौ श्लक्ष्णौ चरणौ सुप्रतिष्ठितौ ।
दृष्ट्वा ताम्रनखौ तस्या दीप्यते मे शरीरजः ॥ १५

हुताशनार्चिसङ्काशामेनां सौरीमिव प्रभाम् ।
दृष्ट्वा सीतां विशालाक्षीं कामस्य वशमेयिवान् ॥ १६

उन्नसं विमलं वल्गु वदनं चारुलोचनम् ।
पश्यंस्तदा वशस्तस्याः कामस्य वशमेयिवान् ॥ १७

क्रोधहर्षसमानेन दुर्वर्णकरणेन च ।
शोकसन्तापनित्येन कामेन कलुषीकृतः ॥ १८

सा तु संवत्सरं कालं मामयाचत भामिनी ।
प्रतीक्षमाणा भर्तारं राममायतलोचना ॥ १९

तन्मया चारुनेत्रायाः प्रतिज्ञातं वचः शुभम् ।
श्रान्तोऽहं सततं कामाद्यातो हय इवाध्वनि ॥ २०

कथं सागरमक्षोभ्यमुत्तरन्ति वनौकसः ।
बहुसत्त्वसमाकीर्णं तौ वा दशरथात्मजौ ॥ २१

अथवा कपिनैकेन कृतं वः कदनं महत् ।
दुर्ज्ञेयाः कार्यगतयो ब्रूत यस्य यथामति ॥ २२

मानुषान्मे भयं नास्ति तथापि तु विमृश्यताम् ।
पुरा देवासुरे युद्धे युष्माभिः सहितोऽजयम् ।
ते मे भवन्तश्च तथा सुग्रीवप्रमुखान्हरीन् ॥ २३

परे पारे समुद्रस्य पुरस्कृत्य नृपात्मजौ ।
सीतायाः पदवीं वीरौ संप्राप्तौ वरुणालयम् ॥ २४

अदेया च यथा सीता वध्यौ दशरथात्मजौ ।
भवद्भिर्मन्त्र्यतां मन्त्रः सुनीतिश्चाभिधीयताम् ॥ २५

न हि शक्तिं प्रपश्यामि जगत्यन्यस्य कस्यचित् ।
सागरं वानरैस्तीर्त्वा निश्चयेन जयो मम ॥ २६

तस्य कामपरीतस्य निशम्य परिदेवितम् ।
कुम्भकर्णः प्रचुक्रोध वचनं चेदमब्रवीत् ॥ २७

यदा तु रामस्य सलक्ष्मणस्य
प्रसह्य सीता खलु सा इहाहृता ।
सकृत्समीक्ष्यैव सुनिश्चितं तदा
भजेत चित्तं यमुनेव यामुनम् ॥ २८

सर्वमेतन्महाराज कृतमप्रतिमं तव ।
विधीयेत सहास्माभिरादावेवास्य कर्मणः ॥ २९

न्यायेन राजा कार्याणि यः करोति दशानन ।
न स सन्तप्यते पश्चान्निश्चितार्थमतिर्नृपः ॥ ३०

अनुपायेन कर्माणि विपरीतानि यानि च ।
क्रियमाणानि दुष्यन्ति हवींष्यप्रयतेष्विव ॥ ३१

यः पश्चात्पूर्वकार्याणि कर्माण्यभिचिकीर्षति ।
पूर्वं चापरकार्याणि न स वेद नयानयौ ॥ ३२

चपलस्य तु कृत्येषु प्रसमीक्ष्याधिकं बलम् ।
छिद्रमन्ये प्रपद्यन्ते क्रौञ्चस्य खमिव द्विजाः ॥ ३३

त्वयेदं महदारब्धं कार्यमप्रतिचिन्तितम् ।
दिष्ट्या त्वां नावधीद्रामो विषमिश्रमिवामिषम् ॥ ३४

तस्मात्त्वया समारब्धं कर्म ह्यप्रतिमं परैः ।
अहं समीकरिष्यामि हत्वा शत्रूंस्तवानघ ॥ ३५

अहमुत्सादयिष्यामि शत्रूंस्तव विशां पते ॥ ३६

यदि शक्रविवस्वन्तौ यदि पावकमारुतौ ।
तावहं योधयिष्यामि कुबेरवरुणावपि ॥ ३७

गिरिमात्रशरीरस्य गदापरिघयोधिनः ।
नर्दतस्तीक्ष्णदंष्ट्रस्य बिभियाद्वै पुरन्दरः ॥ ३८

पुनर्मां स द्वितीयेन शरेण निहनिष्यति ।
ततोऽहं तस्य पास्यामि रुधिरं काममाश्वस ॥ ३९

वधेन वै दाशरथेः सुखावहं
जयं तवाहर्तुमहं यतिष्ये ।
हत्वा च रामं सह लक्ष्मणेन
खादामि सर्वान्हरियोधमुख्यान् ॥ ४०

रमस्व कामं पिब चाग्र्यवारुणीं
कुरुष्व कार्याणि हितानि विज्वरः ।
मया तु रामे गमिते यमक्षयं
चिराय सीता वशगा भविष्यति ॥ ४१

इति द्वादशः सर्गः ॥



## त्रयोदशः सर्गः ॥

रावणं क्रुद्धमाज्ञाय महापार्श्वो महाबलः ।
मुहूर्तमनुसञ्चिन्त्य प्राञ्जलिर्वाक्यमब्रवीत् ॥ १

यः खल्वपि वनं प्राप्य मृगव्यालनिषेवितम् ।
न पिबेन्मधु संप्राप्य स नरो बालिशो भवेत् ॥ २

ईश्वरस्येश्वरः कोऽस्ति तव शत्रुनिबर्हण ।
रमस्व सह वैदेह्या शत्रूनाक्रम्य मूर्धसु ॥ ३

बलात् कुक्कुटवृत्तेन वर्तस्व सुमहाबल ।
आक्रम्याक्रम्य सीतां वै त्वं भुङ्क्ष्व च रमस्व च ॥ ४

लब्धकामस्य यत्पश्चादागमिष्यति ते भयम् ।
प्राप्तमप्राप्तकालं वा सर्वं प्रतिसहिष्यसि ॥ ५

कुम्भकर्णः सहास्माभिरिन्द्रजिच्च महाबलः ।
प्रतिषेधयितुं शक्तौ सवज्रमपि वज्रिणम् ॥ ६

उपप्रदानं सान्त्वं वा भेदं वा कुशलैः कृतम् ।
समतिक्रम्य दण्डेन सिद्धिमर्थेषु रोचय ॥ ७

इह प्राप्तान् वयं सर्वाञ्शत्रूंस्तव महाबल ।
वशे शस्त्रप्रपातेन करिष्यामो न संशयः ॥ ८

एवमुक्तस्तदा राजा महापार्श्वेन रावणः ।
तस्य संपूजयन् वाक्यमिदं वचनमब्रवीत् ॥ ९

महापार्श्व प्रमुषितं रहस्यं किञ्चिदात्मनः ।
चिरवृत्तं तदाख्यास्ये यदवाप्तं मया पुरा ॥ १०

पितामहस्य भवनं गच्छन्तीं पुञ्जिकस्थलाम् ।
चञ्चूर्यमाणामद्राक्षमाकाशेऽग्निशिखामिव ॥ ११

सा प्रसह्य मया भुक्ता कृता विवसना ततः ।
स्वयंभोर्भवनं प्राप्ता लोलिता नलिनी यथा ॥ १२

तच्च तस्य तदा मन्ये ज्ञातमासीन्महात्मनः ।
अथ संकुपितो देवो मामिदं वाक्यमब्रवीत् ॥ १३

अद्य प्रभृति यामन्यां बलान्नारीं गमिष्यसि ।
तदा ते शतधा मूर्धा भविष्यति न संशयः ॥ १४

इत्यहं तस्य शापस्य भीतः प्रसभमेव ताम् ।
नारोपये बलात्सीतां वैदेहीं शयने स्वके ॥ १५

सागरस्येव मे वेगो मारुतस्येव मे गतिः ।
नैतद्दाशरथिर्वेद ह्यासादयति तेन माम् ॥ १६

को हि सिंहमिवासीनं सुप्तं गिरिगुहाशये ।
क्रुद्धं मृत्युमिवासीनं संबोधयितुमिच्छति ॥ १७

न मत्तो निर्गतान्बाणान् द्विजिह्वानिव पन्नगान् ।
रामः पश्यति संग्रामे तेन मामभिगच्छति ॥ १८

क्षिप्रं वज्रोपमैर्बाणैः शतधा कार्मुकच्युतैः ।
राममादीपयिष्यामि उल्काभिरिव कुञ्जरम् ॥ १९

तच्चास्य बलमादास्ये बलेन महता वृतः ।
उदयन् सविता काले नक्षत्राणां प्रभामिव ॥ २०

न वासवेनापि सहस्रचक्षुषा
युधा न शक्यो वरुणेन वा पुनः ।

मया त्वियं बाहुबलेन निर्जिता
पुरा पुरी वैश्रवणेन पालिता ॥ २१

इति त्रयोदशः सर्गः ॥



## चतुर्दशः सर्गः ॥

निशाचरेन्द्रस्य वचो निशम्य
स कुम्भकर्णस्य च गर्जितानि ।
विभीषणो राक्षसराजमुख्य-
मुवाच वाक्यं हितमर्थयुक्तम् ॥ १

वृतो हि बाह्वन्तरभोगराशि-
श्चिन्ताविषः सुस्मिततीक्ष्णदंष्ट्रः ।
पञ्चाङ्गुलीपञ्चशिरोऽतिकायः
सीतामहाहिस्तव केन राजन् ॥ २

यावन्न लङ्कां समभिद्रवन्ति
वलीमुखाः पर्वतकूटमात्राः ।
दंष्ट्रायुधाश्चैव नखायुधाश्च
प्रदीयतां दाशरथाय मैथिली ॥ ३

यावन्न गृह्णन्ति शिरांसि बाणाः
रामेरिता राक्षसपुङ्गवानाम् ।
वज्रोपमा वायुसमप्रवेगाः
प्रदीयतां दाशरथाय मैथिली ॥ ४

न कुम्भकर्णेन्द्रजितौ न राजा
तथा महापार्श्वमहोदरौ वा ।
निकुम्भकुम्भौ च तथाऽतिकायः
स्थातुं समर्था युधि राघवस्य ॥ ५

जीवंस्तु रामस्य न मोक्ष्यसे त्वं
गुप्तः सवित्राप्यथ वा मरुद्भिः ।
न वासवस्याङ्कगतो न मृत्यो-
र्न खं न पातालमनुप्रविष्टः ॥ ६

निशम्य वाक्यं तु विभीषणस्य
ततः प्रहस्तो वचनं बभाषे ।
न नो भयं विद्म न दैवतेभ्यो
न दानवेभ्यो ह्यथवा कदाचित् ॥ ७

न यक्षगन्धर्वमहोरगेभ्यो
भयं न संख्ये पतगोत्तमेभ्यः ।

कथं नु रामाद्भविता भयं नो
नरेन्द्रपुत्रात् समरे कदाचित् ॥ ८

प्रहस्तवाक्यं त्वहितं निशम्य
विभीषणो राजहितानुकाङ्क्षी ।
ततो महात्मा वचनं बभाषे
धर्मार्थकामेषु निविष्टबुद्धिः ॥ ९

प्रहस्त राजा च महोदरश्च
त्वं कुम्भकर्णश्च यथाऽर्थजातम् ।
ब्रवीथ रामं प्रति तन्न शक्यं
यथा गतिः स्वर्गमधर्मबुद्धेः ॥ १०

वधस्तु रामस्य मया त्वया वा
प्रहस्त सर्वैरपि राक्षसैर्वा ।
कथं भवेदर्थविशारदस्य
महार्णवं तर्तुमिवाप्लवस्य ॥ ११

धर्मप्रधानस्य महारथस्य
इक्ष्वाकुवंशप्रभवस्य राज्ञः ।
प्रहस्त देवाश्च तथाविधस्य
कृत्येषु शक्तस्य भवन्ति मूढाः ॥ १२

तीक्ष्णा न तावत्तव कङ्कपत्रा
दुरासदा राघवविप्रमुक्ताः ।
भित्त्वा शरीरं प्रविशन्ति बाणाः
प्रहस्त तेनैव विकत्थसे त्वम् ॥ १३

भित्त्वा न तावत्प्रविशन्ति कायं
प्राणान्तकास्तेऽशनितुल्यवेगाः ।
शिताः शरा राघवविप्रमुक्ताः
प्रहस्त तेनैव विकत्थसे त्वम् ॥ १४

न रावणो नातिबलस्त्रिशीर्षो
न कुम्भकर्णस्य सुतो निकुम्भः ।
न चेन्द्रजिद्दाशरथिं प्रसोढुं
त्वं वा रणे शक्रसमं समर्थः ॥ १५

देवान्तको वाऽपि नरान्तको वा
तथाऽतिकायोऽतिरथो महात्मा ।
अकम्पनश्चाद्रिसमानसारः
स्थातुं न शक्ता युधि राघवस्य ॥ १६

अयं हि राजा व्यसनाभिभूतो
मित्रैरमित्रप्रतिमैर्भवद्भिः ।

अन्वास्यते राक्षसनाशनार्थे
तीक्ष्णः प्रकृत्या ह्यसमीक्ष्यकारी ॥ १७

अनन्तभोगेन सहस्रमूर्ध्ना
नागेन भीमेन महाबलेन ।
बलात् परिक्षिप्तमिमं भवन्तो
राजानमुत्क्षिप्य विमोचयन्तु ॥ १८

यावत्तु केशग्रहणात्सुहृद्भिः
समेत्य सर्वैः परिपूर्णकामैः ।
निगृह्य राजा परिरक्षितव्यो
भूतैर्यथा भीमबलैर्गृहीतः ॥ १९

सुवारिणा राघवसागरेण
प्रच्छाद्यमानस्तरसा भवद्भिः ।
युक्तस्त्वयं तारयितुं समेत्य
काकुत्स्थपातालमुखे पतन् सः ॥ २०

इदं पुरस्यास्य सराक्षसस्य
राज्ञश्च पथ्यं ससुहृज्जनस्य ।
सम्यग्घि वाक्यं स्वमतं ब्रवीमि
नरेन्द्रपुत्राय ददाम पत्नीम् ॥ २१

परस्य वीर्यं स्वबलं च बुद्ध्वा
स्थानं क्षयं चैव तथैव वृद्धिम् ।
तथा स्वपक्षेऽप्यनुमृश्य बुद्ध्या
वदेत् क्षमं स्वामिहितं च मन्त्री ॥ २२

इति चतुर्दशः सर्गः ॥



## पञ्चदशः सर्गः ॥

बृहस्पतेस्तुल्यमतेर्वचस्त-
न्निशम्य यत्नेन विभीषणस्य ।
ततो महात्मा वचनं बभाषे
तत्रेन्द्रजिन्नैर्ऋतयोधमुख्यः ॥ १

किं नाम ते तात कनिष्ठ वाक्य-
मनर्थकं चैव सुभीतवच्च ।
अस्मिन् कुले यो हि भवेन्न जातः
सोऽपीदृशं नैव वदेन्न कुर्यात् ॥ २

सत्त्वेन वीर्येण पराक्रमेण
शौर्येण धैर्येण च तेजसा च ।

एकः कुलेऽस्मिन् पुरुषो विमुक्तो
विभीषणस्तात कनिष्ठ एषः ॥ ३

किं नाम तौ राक्षस राजपुत्रा-
वस्माकमेकेन हि राक्षसेन ।
सुप्राकृतेनापि रणे निहन्तुं
शक्यौ कुतो भीषयसे स्म भीरो ॥ ४

त्रिलोकनाथो ननु देवराजः
शक्रो मया भूमितले निविष्टः ।
भयार्दिताश्चापि दिशः प्रपन्नाः
सर्वे तथा देवगणाः समग्राः ॥ ५

ऐरावतो विस्वरमुन्नदन् सः
निपातितो भूमितले मया तु ।
विकृष्य दन्तौ तु मया प्रसह्य
वित्रासिता देवगणाः समग्राः ॥ ६

सोऽहं सुराणामपि दर्पहन्ता
दैत्योत्तमानामपि शोकदाता ।
कथं नरेन्द्रात्मजयोर्न शक्तो
मनुष्ययोः प्राकृतयोः सुवीर्यः ॥ ७

अथेन्द्रकल्पस्य दुरासदस्य
महौजसस्तद्वचनं निशम्य ।
ततो महार्थं वचनं बभाषे
विभीषणः शस्त्रभृतां वरिष्ठः ॥ ८

न तात मन्त्रे तव निश्चयोऽस्ति
बालस्त्वमद्याप्यविपक्वबुद्धिः ।
तस्मात्त्वया ह्यात्मविनाशनाय
वचोऽर्थहीनं बहु विप्रलप्तम् ॥ ९

पुत्रप्रवादेन तु रावणस्य
त्वमिन्द्रजिन्मित्रमुखोऽसि शत्रुः ।
यस्येदृशं राघवतो विनाशं
निशम्य मोहादनुमन्यसे त्वम् ॥ १०

त्वमेव वध्यश्च सुदुर्मतिश्च
स चापि वध्यो य इहानयत्त्वाम् ।
बालं दृढं साहसिकं च योऽद्य
प्रावेशयन्मन्त्रकृतां समीपम् ॥ ११

मूढोऽप्रगल्भोऽविनयोपपन्न-
स्तीक्ष्णस्वभावोऽल्पमतिर्दुरात्मा ।

मूर्खस्त्वमत्यन्तसुदुर्मतिश्च
त्वमिन्द्रजिद्बालतया ब्रवीषि ॥ १२

को ब्रह्मदण्डप्रतिमप्रकाशा-
नर्चिष्मतः कालनिकाशरूपान् ।
सहेत बाणान् यमदण्डकल्पान्
समक्षमुक्तान् युधि राघवेण ॥ १३

धनानि रत्नानि सभूषणानि
वासांसि दिव्यानि मणींश्च चित्रान् ।
सीतां च रामाय निवेद्य देवीं
वसेम राजन्निह वीतशोकाः ॥ १४

इति पञ्चदशः सर्गः ॥



## षोडशः सर्गः ॥

सुनिविष्टं हितं वाक्यमुक्तवन्तं विभीषणम् ।
अब्रवीत्परुषं वाक्यं रावणः कालचोदितः ॥ १

वसेत्सह सपत्नेन क्रुद्धेनाशीविषेण वा ।
न तु मित्रप्रवादेन संवसेच्छत्रुसेविना ॥ २

जानामि शीलं ज्ञातीनां सर्वलोकेषु राक्षस ।
हृष्यन्ति व्यसनेष्वेते ज्ञातीनां ज्ञातयः सदा ॥ ३

प्रधानं साधनं वैद्यं धर्मशीलं च राक्षस ।
ज्ञातयो ह्यवमन्यन्ते शूरं परिभवन्ति च ॥ ४

नित्यमन्योन्यसंहृष्टा व्यसनेष्वाततायिनः ।
प्रच्छन्नहृदया घोरा ज्ञातयस्तु भयावहाः ॥ ५

श्रूयन्ते हस्तिभिर्गीताः श्लोकाः पद्मवने क्वचित् ।
पाशहस्तान्नरान्दृष्ट्वा शृणु तान् गदतो मम ॥ ६

नाग्निर्नान्यानि शस्त्राणि न नः पाशा भयावहाः ।
घोराः स्वार्थप्रयुक्तास्तु ज्ञातयो नो भयावहाः ॥ ७

उपायमेते वक्ष्यन्ति ग्रहणे नात्र संशयः ।
कृत्स्नाद्भयाज्ज्ञातिभयं सुकष्टं विदितं च नः ॥ ८

विद्यते गोषु सम्पन्नं विद्यते ब्राह्मणे दमः ।
विद्यते स्त्रीषु चापल्यं विद्यते ज्ञातितो भयम् ॥ ९

ततो नेष्टमिदं सौम्य यदहं लोकसत्कृतः ।
ऐश्वर्येणाभिजातश्च रिपूणां मूर्ध्नि च स्थितः ॥ १०

यथा पुष्करपर्णेषु पतितास्तोयबिन्दवः ।
न श्लेषमुपगच्छन्ति तथाऽनार्येषु सौहृदम् ॥ ११

यथा शरदि मेघानां सिञ्चतामभिगर्जताम् ।
न भवत्यम्बुसंक्लेदस्तथाऽनार्येषु सौहृदम् ॥ १२

यथा मधुकरस्तर्षाद्रसं विन्दन्न विद्यते ।
तथा त्वमपि तत्रैव तथाऽनार्येषु सौहृदम् ॥ १३

यथा पूर्वं गजः स्नात्वा गृह्य हस्तेन वै रजः ।
दूषयत्यात्मनो देहं यथाऽनार्येषु सौहृदम् ॥ १४

अन्यस्त्वेवंविधं ब्रूयाद्वाक्यमेतन्निशाचर ।
अस्मिन्मुहूर्ते न भवेत्त्वां तु धिक्कुलपांसनम् ॥ १५

इत्युक्तः परुषं वाक्यं न्यायवादी विभीषणः ।
उत्पपात गदापाणिश्चतुर्भिः सह राक्षसैः ॥ १६

अब्रवीच्च तदा वाक्यं जातक्रोधो विभीषणः ।
अन्तरिक्षगतः श्रीमान् भ्रातरं राक्षसाधिपम् ॥ १७

स त्वं भ्राताऽसि मे राजन् ब्रूहि मां यद्यदिच्छसि ।
ज्येष्ठो मान्यः पितृसमो न त्वं धर्मपथे स्थितः ॥
इदं तु परुषं वाक्यं न क्षमाम्यनृतं तव ॥ १८

सुनीतं हितकामेन वाक्यमुक्तं दशानन ।
न गृह्णन्त्यकृतात्मानः कालस्य वशमागताः ॥ १९

सुलभाः पुरुषा राजन् सततं प्रियवादिनः ।
अप्रियस्य तु पथ्यस्य वक्ता श्रोता च दुर्लभः ॥ २०

बद्धस्त्वं कालपाशेन सर्वभूतापहारिणा ।
न नश्यन्तमवेक्षे त्वां प्रदीप्तं शरणं यथा ॥ २१

दीप्तपावकसङ्काशैः शितैः काञ्चनभूषणैः ।
न त्वामिच्छाम्यहं द्रष्टुं रामेण निहतं शरैः ॥ २२

शूराश्च बलवन्तश्च कृतास्त्राश्च रणाजिरे ।
कालाभिपन्नाः सीदन्ति यथा वालुकसेतवः ॥ २३

तन्मर्षयतु यच्चोक्तं गुरुत्वाद्धितमिच्छता ।
आत्मानं सर्वथा रक्ष पुरीं चेमां सराक्षसाम् ॥ २४

स्वस्ति तेऽस्तु गमिष्यामि सुखी भव मया विना ॥ २५

निवार्यमाणस्य मया हितैषिणा
न रोचते ते वचनं निशाचर ।
परीतकाला हि गतायुषो नरा
हितं न गृह्णन्ति सुहृद्भिरीरितम् ॥ २६

इति षोडशः सर्गः ॥



## सप्तदशः सर्गः ॥

इत्युक्त्वा परुषं वाक्यं रावणं रावणानुजः ।
आजगाम मुहूर्तेन यत्र रामः सलक्ष्मणः ॥ १

तं मेरुशिखराकारं दीप्तामिव शतह्रदाम् ।
गगनस्थं महीस्थास्ते ददृशुर्वानराधिपाः ॥ २

स हि मेघाचलप्रख्यो महेन्द्रसमविक्रमः ।
सर्वायुधधरो वीरो दिव्याभरणभूषितः ॥ ३

ये चाप्यनुचरास्तस्य चत्वारो भीमविक्रमाः ।
तेऽपि वर्मायुधोपेता भूषणैश्च विभूषिताः ॥ ४

तमात्मपञ्चमं दृष्ट्वा सुग्रीवो वानराधिपः ।
वानरैः सह दुर्धर्षश्चिन्तयामास बुद्धिमान् ॥ ५

चिन्तयित्वा मुहूर्तं तु वानरांस्तानुवाच ह ।
हनुमत्प्रमुखान्सर्वानिदं वचनमुत्तमम् ॥ ६

एष सर्वायुधोपेतश्चतुर्भिः सह राक्षसैः ।
राक्षसोऽभ्येति पश्यध्वमस्मान्हन्तुं न संशयः ॥ ७

सुग्रीवस्य वचः श्रुत्वा सर्वे ते वानरोत्तमाः ।
सालानुद्यम्य शैलांश्च इदं वचनमब्रुवन् ॥ ८

शीघ्रं व्यादिश नो राजन् वधायैषां दुरात्मनाम् ।
निपतन्तु हता यावद्धरण्यामल्पतेजसः ॥ ९

तेषां संभाषमाणानामन्योन्यं स विभीषणः ।
उत्तरं तीरमासाद्य खस्थ एव व्यतिष्ठत ॥ १०

उवाच च महाप्राज्ञः स्वरेण महता महान् ।
सुग्रीवं तांश्च संप्रेक्ष्य खस्थ एव विभीषणः ॥ ११

रावणो नाम दुर्वृत्तो राक्षसो राक्षसाधिपः ।
तस्याहमनुजो भ्राता विभीषण इति श्रुतः ॥ १२

तेन सीता जनस्थानाद्धृता हत्वा जटायुषम् ।
रुद्धा च विवशा दीना राक्षसीभिः सुरक्षिता ॥ १३

तमहं हेतुभिर्वाक्यैर्विविधैश्च न्यदर्शयम् ।
साधु निर्यात्यतां सीता रामायेति पुनः पुनः ॥ १४

स च न प्रतिजग्राह रावणः कालचोदितः ।
उच्यमानं हितं वाक्यं विपरीत इवौषधम् ॥ १५

सोऽहं परुषितस्तेन दासवच्चावमानितः ।
त्यक्त्वा पुत्रांश्च दारांश्च राघवं शरणं गतः ॥ १६

सर्वलोकशरण्याय राघवाय महात्मने ।
निवेदयत मां क्षिप्रं विभीषणमुपस्थितम् ॥ १७

एतत्तु वचनं श्रुत्वा सुग्रीवो लघुविक्रमः ।
लक्ष्मणस्याग्रतो रामं संरब्धमिदमब्रवीत् ॥ १८

रावणस्यानुजो भ्राता विभीषण इति श्रुतः ।
चतुर्भिः सह रक्षोभिर्भवन्तं शरणं गतः ॥ १९

मन्त्रे व्यूहे नये चारे युक्तो भवितुमर्हसि ।
वानराणां च भद्रं ते परेषां च परन्तप ॥ २०

अन्तर्धानगता ह्येते राक्षसाः कामरूपिणः ।
शूराश्च निकृतिज्ञाश्च तेषु जातु न विश्वसेत् ॥ २१

प्रणिधी राक्षसेन्द्रस्य रावणस्य भवेदयम् ।
अनुप्रविश्य सोऽस्मासु भेदं कुर्यान्न संशयः ॥ २२

अथवा स्वयमेवैष छिद्रमासाद्य बुद्धिमान् ।
अनुप्रविश्य विश्वस्ते कदाचित्प्रहरेदपि ॥ २३

मित्रादपि बलं चैव मौलं भृत्यबलं तथा ।
सर्वमेतद्बलं ग्राह्यं वर्जयित्वा द्विषद्बलम् ॥ २४

प्रकृत्या राक्षसो ह्येष भ्राताऽमित्रस्य वै प्रभो ।
आगतश्च रिपोः पक्षात् कथमस्मिन्हि विश्वसेत् ॥ २५

रावणेन प्रणिहितं तमवेहि विभीषणम् ।
तस्याहं निग्रहं मन्ये क्षमं क्षमवतां वर ॥ २६

राक्षसो जिह्मया बुद्ध्या सन्दिष्टोऽयमुपस्थितः ।
प्रहर्तुं माययाच्छन्नो विश्वस्ते त्वयि चानघ ॥ २७

प्रविष्टः शत्रुसैन्यं हि प्राप्तः शत्रुरतर्कितः ।
निहन्यादन्तरं लब्ध्वा उलूक इव वायसान् ॥ २८

वध्यतामेष तीव्रेण दण्डेन सचिवैः सह ।
रावणस्य नृशंसस्य भ्राता ह्येष विभीषणः ॥ २९

एवमुक्त्वा तु तं रामं संरब्धो वाहिनीपतिः ।
वाक्यज्ञो वाक्यकुशलं ततो मौनमुपागमत् ॥ ३०

सुग्रीवस्य तु तद्वाक्यं श्रुत्वा रामो महायशाः ।
समीपस्थानुवाचेदं हनुमत्प्रमुखान् हरीन् ॥ ३१

यदुक्तं कपिराजेन रावणावरजं प्रति ।
वाक्यं हेतुमदत्यर्थं भवद्भिरपि तच्छ्रुतम् ॥ ३२

सुहृदा ह्यर्थकृच्छ्रेषु युक्तं बुद्धिमता सता ।
समर्थेनापि सन्देष्टुं शाश्वतीं भूतिमिच्छता ॥ ३३

इत्येवं परिपृष्टास्ते स्वं स्वं मतमतन्द्रिताः ।
सोपचारं तदा राममूचुर्हितचिकीर्षवः ॥ ३४

अज्ञातं नास्ति ते किञ्चित् त्रिषु लोकेषु राघव ।
आत्मानं पूजयन् राम पृच्छस्यस्मान्सुहृत्तया ॥ ३५

त्वं हि सत्यव्रतः शूरो धार्मिको दृढविक्रमः ।
परीक्ष्यकारी स्मृतिमान् निसृष्टात्मा सुहृत्सु च ॥ ३६

तस्मादेकैकशस्तावद्ब्रुवन्तु सचिवास्तव ।
हेतुतो मतिसम्पन्नाः समर्थाश्च पृथक्पुनः ॥ ३७

इत्युक्ते राघवायाथ मतिमानङ्गदोऽग्रतः ।
विभीषणपरीक्षार्थमुवाच वचनं हरिः ॥ ३८

शत्रोः सकाशात्संप्राप्तः सर्वथा तर्क्य एव हि ।
विश्वासयोग्यः सहसा न कर्तव्यो विभीषणः ॥ ३९

छादयित्वाऽऽत्मभावं हि चरन्ति शठबुद्धयः ।
प्रहरन्ति च रन्ध्रेषु सोऽनर्थः सुमहान् भवेत् ॥ ४०

अर्थानर्थौ विनिश्चित्य व्यवसायं भजेत ह ।
गुणतः संग्रहं कुर्याद् दोषतस्तु विसर्जयेत् ॥ ४१

यदि दोषो महांस्तस्मिंस्त्यज्यतामविशङ्कितम् ।
गुणान्वापि बहूञ्ज्ञात्वा संग्रहः क्रियतां विभो ॥ ४२

शरभस्त्वथ निश्चित्य वीरो वचनमब्रवीत् ।
क्षिप्रमस्मिन्नरव्याघ्र चारः प्रतिविधीयताम् ॥ ४३

प्रणिधाय हि चारेण यथावत्सूक्ष्मबुद्धिना ।
परीक्ष्य च ततः कार्यो यथान्यायं परिग्रहः ॥ ४४

जाम्बवांस्त्वथ संप्रेक्ष्य शास्त्रबुद्ध्या विचक्षणः ।
वाक्यं विज्ञापयामास गुणवद्दोषवर्जितम् ॥ ४५

बद्धवैराच्च पापाच्च राक्षसेन्द्राद्विभीषणः ।
अदेशकाले संप्राप्तः सर्वथा शङ्क्यतामयम् ॥ ४६

ततो मैन्दस्तु संप्रेक्ष्य नयापनयकोविदः ।
वाक्यं वचनसम्पन्नो बभाषे हेतुमत्तरम् ॥ ४७

वचनं नाम तस्यैष रावणस्य विभीषणः ।
पृच्छ्यतां मधुरेणायं शनैर्नरपतीश्वर ॥ ४८

भावमस्य तु विज्ञाय ततस्तत्त्वं करिष्यसि ।
यदि दुष्टो न दुष्टो वा बुद्धिपूर्वं नरर्षभ ॥ ४९

अथ संस्कारसम्पन्नो हनूमान्सचिवोत्तमः ।
उवाच वचनं श्लक्ष्णमर्थवन्मधुरं लघु ॥ ५०

न भवन्तं मतिश्रेष्ठं समर्थं वदतां वरम् ।
अतिशाययितुं शक्तो बृहस्पतिरपि ब्रुवन् ॥ ५१

न वादान्नापि सङ्घर्षान्नाधिक्यान्न च कामतः ।
वक्ष्यामि वचनं राजन् यथार्थं राम गौरवात् ॥ ५२

अर्थानर्थनिमित्तं हि यदुक्तं सचिवैस्तव ।
तत्र दोषं प्रपश्यामि क्रिया न ह्युपपद्यते ॥ ५३

ऋते नियोगात्सामर्थ्यमवबोद्धुं न शक्यते ।
सहसा विनियोगो हि दोषवान्प्रतिभाति मे ॥ ५४

चारप्रणिहितं युक्तं यदुक्तं सचिवैस्तव ।
अर्थस्यासंभवात्तत्र कारणं नोपपद्यते ॥ ५५

अदेशकाले संप्राप्त इत्ययं यद्विभीषणः ।
विवक्षा तत्र मेऽस्तीयं तां निबोध यथामति ॥ ५६

स एष देशः कालश्च भवतीह यथा तथा ।
पुरुषात्पुरुषं प्राप्य तथा दोषगुणावपि ॥ ५७

दौरात्म्यं रावणे दृष्ट्वा विक्रमं च तथा त्वयि ।
युक्तमागमनं तस्य विमृशानस्य बुद्धितः ॥ ५८

अज्ञातरूपैः पुरुषैः स राजन्पृच्छ्यतामिति ।
यदुक्तमत्र मे प्रेक्षा काचिदस्ति समीक्षिता ॥ ५९

पृच्छ्यमानो विशङ्केत सहसा बुद्धिमान् वचः ।
तत्र मित्रं प्रदुष्येत मिथ्या पृष्टं सुखागतम् ॥ ६०

अशक्यः सहसा राजन् भावो वेत्तुं परस्य वै ।
अन्तःस्वभावैर्गीतैस्तैर्नैपुण्यं पश्यता भृशम् ॥ ६१

न त्वस्य ब्रुवतो जातु लक्ष्यते दुष्टभावता ।
प्रसन्नं वदनं चापि तस्मान्मे नास्ति संशयः ॥ ६२

अशङ्कितमतिः स्वस्थो न शठः परिसर्पति ।
न चास्य दुष्टा वाक्चास्ति तस्मान्मे नास्ति संशयः ॥

आकारश्छाद्यमानोऽपि न शक्यो विनिगूहितुम् ।
बलाद्धि विवृणोत्येव भावमन्तर्गतं नृणाम् ॥ ६४

देशकालोपपन्नं च कार्यं कार्यविदां वर ।
सफलं कुरुते क्षिप्रं प्रयोगेणाभिसंहितम् ॥ ६५

उद्योगं तव संप्रेक्ष्य मिथ्यावृत्तं च रावणम् ।
वालिनं च हतं श्रुत्वा सुग्रीवं चाभिषेचितम् ॥ ६६

अमर्षी भ्रातरं त्यक्त्वा भवन्तं शरणं गतः ।
देशकालोपपन्नश्च तत्कुलीनश्च राक्षसः ॥ ६७

राज्यं प्रार्थयमानश्च बुद्धिपूर्वमिहागतः ।
एतावत्तु पुरस्कृत्य युज्यते त्वस्य संग्रहः ॥ ६८

यथाशक्ति मयोक्तं तु राक्षसस्यार्जवं प्रति ।
त्वं प्रमाणं हि शेषस्य श्रुत्वा बुद्धिमतां वर ॥ ६९

इति सप्तदशः सर्गः ॥



# अष्टादशः सर्गः ॥

अथ रामः प्रसन्नात्मा श्रुत्वा वायुसुतस्य ह ।
प्रत्यभाषत दुर्धर्षः श्रुतवानात्मनि स्थितम् ॥ १

ममापि तु विवक्षाऽस्ति काचित्प्रति विभीषणम् ।
श्रोतुमिच्छामि तत्सर्वं भवद्भिः श्रेयसि स्थितैः ॥ २

मित्रभावेन संप्राप्तं न त्यजेयं कथञ्चन ।
दोषो यद्यपि तस्य स्यात् सतामेतदगर्हितम् ॥ ३

सुग्रीवस्त्वथ तद्वाक्यमाभाष्य च विमृश्य च ।
ततः शुभतरं वाक्यमुवाच हरिपुङ्गवः ॥ ४

सुदुष्टो वाप्यदुष्टो वा किमेष रजनीचरः ।
ईदृशं व्यसनं प्राप्तं भ्रातरं यः परित्यजेत् ।
को नाम स भवेत्तस्य यमेष न परित्यजेत् ॥ ५

वानराधिपतेर्वाक्यं श्रुत्वा सर्वानुदीक्ष्य च ।
ईषदुत्स्मयमानस्तु लक्ष्मणं पुण्यलक्षणम् ॥ ६

इति होवाच काकुत्स्थो वाक्यं सत्यपराक्रमः ॥ ७

अनधीत्य च शास्त्राणि वृद्धाननुपसेव्य च ।
न शक्यमीदृशं वक्तुं यदुवाच हरीश्वरः ॥ ८

अपि सूक्ष्मतरं किञ्चिद् यत्र प्रतिभाति मे ।
प्रत्यक्षं लौकिकं वाऽपि विद्यते सर्वराजसु ॥ ९

अमित्रास्तत्कुलीनाश्च प्रातिदेश्याश्च कीर्तिताः ।
व्यसनेषु प्रहर्तारस्तस्मादयमिहागतः ॥ १०

अपापास्तत्कुलीनाश्च मानयन्ति स्वकान् हितान् ।
एष प्रायो नरेन्द्राणां शङ्कनीयस्तु शोभनः ॥ ११

यस्तु दोषस्त्वया प्रोक्तो ह्यादानेऽरिबलस्य च ।
तत्र ते कीर्तयिष्यामि यथाशास्त्रमिदं शृणु ॥ १२

न वयं तत्कुलीनाश्च राज्यकाङ्क्षी च राक्षसः ।
पण्डिता हि भविष्यन्ति तस्माद्ग्राह्यो विभीषणः ॥ १३

अव्यग्राश्च प्रहृष्टाश्च न भविष्यन्ति सङ्गताः ।
प्रणादश्च महानेष ततोऽस्य भयमागतम् ॥ १४

इति भेदं गमिष्यन्ति तस्माद्ग्राह्यो विभीषणः ॥
न सर्वे भ्रातरस्तात भवन्ति भरतोपमाः ।
यद्विधा वा पितुः पुत्राः सुहृदो वा भवद्विधाः ॥ १५

एवमुक्तस्तु रामेण सुग्रीवः सहलक्ष्मणः ।
उत्थायेदं महाप्राज्ञः प्रणतो वाक्यमब्रवीत् ॥ १६

रावणेन प्रणिहितं तमवेहि विभीषणम् ।
तस्याहं निग्रहं मन्ये क्षमं क्षमवतां वर ॥ १७

राक्षसो जिह्मया बुद्धया सन्दिष्टोऽयमिहागतः ।
प्रहर्तुं त्वयि विश्वस्ते प्रच्छन्नो मयि वाऽनघ ॥ १८

लक्ष्मणे वा महाबाहो स वध्यः सचिवैः सह ।
रावणस्य नृशंसस्य भ्राता ह्येष विभीषणः ॥ १९

एवमुक्त्वा रघुश्रेष्ठं सुग्रीवो वाहिनीपतिः ।
वाक्यज्ञो वाक्यकुशलं ततो मौनमुपागमत् ॥ २०

सुग्रीवस्य तु तद्वाक्यं श्रुत्वा रामो विमृश्य च ।
ततः शुभतरं वाक्यमुवाच हरिपुङ्गवम् ॥ २१

सुदुष्टो वाप्यदुष्टो वा किमेष रजनीचरः ।
सूक्ष्ममप्यहितं कर्तुं ममाशक्तः कथञ्चन ॥ २२

पिशाचान्दानवान्यक्षान् पृथिव्यां ये च रक्षसान् ।
अङ्गुल्यग्रेण तान्हन्यामिच्छन् हरिगणेश्वर ॥ २३

श्रूयते हि कपोतेन शत्रुः शरणमागतः ।
अर्चितश्च यथान्यायं स्वैश्च मांसैर्निमन्त्रितः ॥ २४

स हि तं प्रतिजग्राह भार्याहर्तारमागतम् ।
कपोतो वानरश्रेष्ठ किं पुनर्मद्विधो जनः ॥ २५

ऋषेः कण्वस्य पुत्रेण कण्डुना परमर्षिणा ।
शृणु गाथां पुरा गीतां धर्मिष्ठां सत्यवादिना ॥ २६

बद्धाञ्जलिपुटं दीनं याचन्तं शरणागतम् ।
न हन्यादानृशंस्यार्थमपि शत्रुं परन्तप ॥ २७

आर्तो वा यदि वा दृप्तः परेषां शरणागतः ।
अरिः प्राणान् परित्यज्य रक्षितव्यः कृतात्मना ॥ २८

स चेद्भयाद्वा मोहाद्वा कामाद्वापि न रक्षति ।
स्वया शक्त्या यथाशक्ति तत्पापं लोकगर्हितम् ॥ २९

विनष्टः पश्यतस्तस्य रक्षितुः शरणागतः ।
आदाय सुकृतं तस्य सर्वं गच्छेदरक्षितः ॥ ३०

एष दोषो महानत्र प्रपन्नानामरक्षणे ।
अस्वर्ग्यं चायशस्यं च बलवीर्यविनाशनम् ॥ ३१

करिष्यामि यथार्थं तु कण्डोर्वचनमु [illegible] ।
धर्मिष्ठं च यशस्यं च स्वर्ग्यं स्यात्तु फलोदये ॥ ३२

सकृदेव प्रपन्नाय तवास्मीति च याचते ।
अभयं सर्वभूतेभ्यो ददाम्येतद्व्रतं मम ॥ ३३

आनयैनं हरिश्रेष्ठ दत्तमस्याभयं मया ।
विभीषणो वा सुग्रीव यदि वा रावणः स्वयम् ॥ ३४

रामस्य तु वचः श्रुत्वा सुग्रीवः प्लवगेश्वरः ।
प्रत्यभाषत काकुत्स्थं सौहार्देनाभिचोदितः ॥ ३५

किमत्र चित्रं धर्मज्ञ लोकनाथ सुखावह ।
यत्त्वमार्यं प्रभाषेथाः सत्त्ववान् सत्पथे स्थितः ॥ ३६

मम चाप्यन्तरात्माऽयं शुद्धं वेत्ति विभीषणम् ।
अनुमानाच्च भावाच्च सर्वतः सुपरीक्षितः ॥ ३७

तस्मात्क्षिप्रं सहास्माभिस्तुल्यो भवतु राघव ।
विभीषणो महाप्राज्ञः सखित्वं चाभ्युपैतु नः ॥ ३८

ततस्तु सुग्रीववचो निशम्य त-
द्धरीश्वरेणाभिहितं नरेश्वरः ।

विभीषणेनाशु जगाम सङ्गमं
पतत्त्रिराजेन यथा पुरन्दरः ॥ ३९

इति अष्टादशः सर्गः ॥



# एकोनविंशः सर्गः ॥

राघवेणाभये दत्ते सन्नतो रावणानुजः ।
विभीषणो महाप्राज्ञो भूमिं समवलोकयन् ॥ १

खात्पपातावनीं हृष्टो भक्तैरनुचरैः सह ।
स तु रामस्य धर्मात्मा निपपात विभीषणः ॥ २

पादयोः शरणान्वेषी चतुर्भिः सह राक्षसैः ।
अब्रवीच्च तदा रामं वाक्यं तत्र विभीषणः ॥ ३

धर्मयुक्तं च युक्तं च सांप्रतं संप्रहर्षणम् ।
अनुजो रावणस्याहं तेन चास्म्यवमानितः ॥ ४

भवन्तं सर्वभूतानां शरण्यं शरणं गतः ।
परित्यक्ता मया लङ्का मित्राणि च धनानि च ॥ ५

भवद्गतं मे राज्यं च जीवितं च सुखानि च ।
तस्य तद्वचनं श्रुत्वा रामो वचनमब्रवीत् ॥ ६

वचसा सान्त्वयित्वैनं लोचनाभ्यां पिबन्निव ।
आख्याहि मम तत्त्वेन राक्षसानां बलाबलम् ॥ ७

एवमुक्तं तदा रक्षो रामेणाक्लिष्टकर्मणा ।
रावणस्य बलं सर्वमाख्यातुमुपचक्रमे ॥ ८

अवध्यः सर्वभूतानां गन्धर्वासुररक्षसाम् ।
राजपुत्र दशग्रीवो वरदानात्स्वयंभुवः ॥ ९

रावणानन्तरो भ्राता मम ज्येष्ठश्च वीर्यवान् ।
कुम्भकर्णो महातेजाः शक्रप्रतिबलो युधि ॥ १०

राम सेनापतिस्तस्य प्रहस्तो यदि वा श्रुतः ।
कैलासे येन संग्रामे माणिभद्रः पराजितः ॥ ११

बद्धगोधाङ्गुलित्राणो ह्यवध्यकवचो युधि ।
धनुरादाय तिष्ठन् स त्वदृश्यो भवतीन्द्रजित् ॥ १२

संग्रामे स महाव्यूहे तर्पयित्वा हुताशनम् ।
अन्तर्धानगतः शत्रूनिन्द्रजिद्धन्ति राघव ॥ १३

महोदरमहापार्श्वौ राक्षसश्चाप्यकम्पनः ।
अनीकस्थास्तु तस्यैते लोकपालसमा युधि ॥ १४

दशकोटिसहस्राणि रक्षसां कामरूपिणाम् ।
मांसशोणितभक्षाणां लङ्कापुरनिवासिनाम् ॥ १५

स तैस्तु सहितो राजा लोकपालानयोधयम् ।
सह देवैस्तु ते भग्ना रावणेन दुरात्मना ॥ १६

विभीषणस्य तु वचस्तच्छ्रुत्वा रघुसत्तमः ।
अन्वीक्ष्य मनसा सर्वमिदं वचनमब्रवीत् ॥ १७

यानि कर्मापदानानि रावणस्य विभीषण ।
आख्यातानि च तत्वेन ह्यवगच्छामि तान्यहम् ॥ १८

अहं हत्वा दशग्रीवं सप्रहस्तं सहानुजम् ।
राजानं त्वां करिष्यामि सत्यमेतद्ब्रवीमि ते ॥ १९

रसातलं वा प्रविशेत् पातालं वाऽपि रावणः ।
पितामहसकाशं वा न मे जीवन् विमोक्ष्यते ॥ २०

अहत्वा रावणं संख्ये सपुत्रबलबान्धवम् ।
अयोध्यां न प्रवेक्ष्यामि त्रिभिस्तैर्भ्रातृभिः शपे ॥ २१

श्रुत्वा तु वचनं तस्य रामस्याक्लिष्टकर्मणः ।
शिरसा वन्द्य धर्मात्मा वक्तुमेवोपचक्रमे ॥ २२

राक्षसानां वधे साह्यं लङ्कायाश्च प्रधर्षणे ।
करिष्यामि यथाप्राणं प्रवेक्ष्यामि च वाहिनीम् ॥ २३

इति ब्रुवाणं रामस्तु परिष्वज्य विभीषणम् ।
अब्रवील्लक्ष्मणं प्रीतः समुद्राज्जलमानय ॥ २४

तेन चैनं महाप्राज्ञमभिषिञ्च विभीषणम् ।
राजानं रक्षसां क्षिप्रं प्रसन्ने मयि मानद ॥ २५

एवमुक्तस्तु सौमित्रिरभ्यषिञ्चद्विभीषणम् ।
मध्ये वानरमुख्यानां राजानं रामशासनात् ॥ २६

तं प्रसादं तु रामस्य दृष्ट्वा सद्यः प्लवङ्गमाः ।
प्रचुक्रुशुर्महात्मानं साधु साध्विति चाब्रुवन् ॥
अब्रवीच्च हनूमांस्तं सुग्रीवश्च विभीषणम् ॥ २७

कथं सागरमक्षोभ्यं तराम वरुणालयम् ।
सैन्यैः परिवृताः सर्वे वानराणां महौजसाम् ॥ २८

उपायं नाधिगच्छामो यथा नदनदीपतिम् ।
तराम तरसा सर्वे ससैन्या वरुणालयम् ॥ २९

एवमुक्तस्तु धर्मज्ञः प्रत्युवाच विभीषणः ।
समुद्रं राघवो राजा शरणं गन्तुमर्हति ॥ ३०

खानितः सगरेणायमप्रमेयो महोदधिः ।
कर्तुमर्हति रामस्य ज्ञातेः कार्यं महोदधिः ॥ ३१

एवं विभीषणेनोक्तो राक्षसेन विपश्चिता ।
आजगामाथ सुग्रीवो यत्र रामः सलक्ष्मणः ॥ ३२

ततश्चाख्यातुमारेभे विभीषणवचः शुभम् ।
सुग्रीवो विपुलग्रीवः सागरस्योपवेशनम् ॥ ३३

प्रकृत्या धर्मशीलस्य राघवस्याप्यरोचत ॥ ३४

स लक्ष्मणं महातेजाः सुग्रीवं च हरीश्वरम् ।
सत्क्रियार्थं क्रियादक्षः स्मितपूर्वमुवाच ह ॥ ३५

विभीषणस्य मन्त्रोऽयं मम लक्ष्मण रोचते ।
ब्रूहि त्वं सहसुग्रीवस्तवापि यदि रोचते ॥ ३६

सुग्रीवः पण्डितो नित्यं भवान् मन्त्रविचक्षणः ।
उभाभ्यां संप्रधार्यार्थं रोचते यत्तदुच्यताम् ॥ ३७

एवमुक्तौ तु तौ वीरावुभौ सुग्रीवलक्ष्मणौ ।
समुदाचारसंयुक्तमिदं वचनमूचतुः ॥ ३८

किमर्थं नौ नरव्याघ्र न रोचिष्यति राघव ।
विभीषणेन यच्चोक्तमस्मिन् काले सुखावहम् ॥ ३९

अबद्ध्वा सागरे सेतुं घोरेऽस्मिन् वरुणालये ।
लङ्का नासादितुं शक्या सेन्द्रैरपि सुरासुरैः ॥ ४०

विभीषणस्य शूरस्य यथार्थं क्रियतां वचः ।
अलं कालात्ययं कृत्वा समुद्रोऽयं नियुज्यताम् ॥
यथा सैन्येन गच्छामः पुरीं रावणपालिताम् ॥ ४१

एवमुक्तः कुशास्तीर्णे तीरे नदनदीपतेः ।
संविवेश तदा रामो वेद्यामिव हुताशनः ॥ ४२

इति एकोनविंशः सर्गः ॥



## विंशः सर्गः ॥

ततो निविष्टां ध्वजिनीं सुग्रीवेणाभिपालिताम् ।
ददर्श राक्षसोऽभ्येत्य शार्दूलो नाम वीर्यवान् ॥ १

चारो राक्षसराजस्य रावणस्य दुरात्मनः ।
तां दृष्ट्वा सर्वतोऽव्यग्रं प्रतिगम्य स राक्षसः ॥ २

आविश्य लङ्कां वेगेन राजानमिदमब्रवीत् ॥ ३

एष वै वानरर्क्षौघो लङ्कां समभिवर्तते ।
अगाधश्चाप्रमेयश्च द्वितीय इव सागरः ॥ ४

पुत्रौ दशरथस्येमौ भ्रातरौ रामलक्ष्मणौ ।
उत्तमायुधसम्पन्नौ सीतायाः पदमागतौ ॥ ५

एतौ सागरमासाद्य सन्निविष्टौ महाद्युती ।
बलं चाकाशमावृत्य सर्वतो दशयोजनम् ॥ ६

तत्वपूर्वं महाराज क्षिप्रं वेदितुमर्हसि ।
तव दूता महाराज क्षिप्रमर्हन्त्यवेक्षितुम् ॥
उपप्रदानं सान्त्वं वा भेदो वाऽत्र प्रयुज्यताम् ॥ ७

शार्दूलस्य वचः श्रुत्वा रावणो राक्षसाधिपः ।
उवाच सहसा व्यग्रः संप्रधार्यार्थमात्मनः ॥ ८

शुकं नाम तदा रक्षो वाक्यमर्थविदां वरम् ॥ ९

सुग्रीवं ब्रूहि गत्वाशु राजानं वचनान्मम ।
यथासन्देशमक्लीबं श्लक्ष्णया परया गिरा ॥ १०

त्वं वै महाराज कुलप्रसूतो
महाबलश्चर्क्षरजःसुतश्च ।

न कश्चिदर्थस्तव नास्त्यनर्थ-
स्तथासि मे भ्रातृसमो हरीश ॥ ११

अहं यद्यहरं भार्यां राजपुत्रस्य धीमतः ।
किं तत्र तव सुग्रीव किष्किन्धां प्रति गम्यताम् ॥ १२

न हीयं हरिभिर्लङ्का शक्या प्राप्तुं कथञ्चन ।
देवैरपि सगन्धर्वैः किं पुनर्नरवानरैः ॥ १३

स तथा राक्षसेन्द्रेण सन्दिष्टो रजनीचरः ।
शुको विहङ्गमो भूत्वा तूर्णमाप्लुत्य चाम्बरम् ॥ १४

स गत्वा दूरमध्वानमुपर्युपरि सागरम् ।
संस्थितो ह्यम्बरे वाक्यं सुग्रीवमिदमब्रवीत् ॥ १५

सर्वमुक्तं यथादिष्टं रावणेन दुरात्मना ॥
तं प्रापयन्तं वचनं तूर्णमाप्लुत्य वानराः ।
प्रापद्यन्त दिवं क्षिप्रं लोप्तुं हन्तुं च मुष्टिभिः ॥ १६

स तैः प्लवङ्गैः प्रसभं निगृहीतो निशाचरः ।
गगनाद्भूतले चाशु परिगृह्यावतारितः ॥ १७

वानरैः पीड्यमानस्तु शुको वचनमब्रवीत् ॥ १८

न दूतान् घ्नन्ति काकुत्स्थ वार्यन्तां साधु वानराः ।
यस्तु हित्वा मतं भर्तुः स्वमतं संप्रभाषते ।
अनुक्तवादी दूतः सन् स दूतो वधमर्हति ॥ १९

शुकस्य वचनं श्रुत्वा रामस्तु परिदेवितम् ।
उवाच मा वधिष्टेति घ्नतः शाखामृगर्षभान् ॥ २०

स च पत्रलघुर्भूत्वा हरिभिर्दर्शिते भये ।
अन्तरिक्षस्थितो भूत्वा पुनर्वचनमब्रवीत् ॥ २१

सुग्रीव सत्वसंपन्न महाबलपराक्रम ।
किं मया खलु वक्तव्यो रावणो लोकरावणः ॥ २२

स एवमुक्तः प्लवगाधिपस्तदा
प्लवङ्गमानामृषभो महाबलः ।
उवाच वाक्यं रजनीचरस्य
चारं शुकं दीनमदीनसत्वः ॥ २३

न मेऽसि मित्रं न तथानुकम्प्यो
न चोपकर्तासि न मे प्रियोऽसि ।
अरिश्च रामस्य सहानुबन्धः
स मेऽसि वालीव वधार्ह वध्यः ॥ २४

निहन्म्यहं त्वां ससुतं सबन्धु
सज्ञातिवर्गं रजनीचरेश ।
लङ्कां च सर्वां महता बलेन
क्षिप्रं करिष्यामि समेत्य भस्म ॥ २५

न मोक्ष्यसे रावण राघवस्य
सुरैः सहेन्द्रैरपि मूढ गुप्तः ।
अन्तर्हितः सूर्यपथं गतो वा
तथैव पातालमनुप्रविष्टः ॥ २६

तस्य ते त्रिषु लोकेषु न पिशाच न राक्षसम् ।
त्रातारं नानुपश्यामि न गन्धर्वं न चासुरम् ॥ २७

अवधीस्त्वं जरावृद्धं गृध्रराजानमक्षमम् ।
किं नु ते रामसान्निध्ये सकाशे लक्ष्मणस्य वा ॥ २८

हृता सीता विशालाक्षी यां त्वं गृह्य न बुध्यसे ।
महाबलं महाप्राज्ञं दुर्धर्षममरैरपि ॥ २९

न बुध्यसे रघुश्रेष्ठं यस्ते प्राणान् हरिष्यति ।
ततोऽब्रवीद्वालिसुतो ह्यङ्गदो हरिसत्तमः ॥ ३०

नायं दूतो महाराज चारिकः प्रतिभाति मे ।
तुलितं हि बलं सर्वमनेनात्रैव तिष्ठता ॥ ३१

गृह्यतां मा गमल्लङ्कामेतद्धि मम रोचते ॥ ३२

ततो राज्ञा समादिष्टाः समुत्प्लुत्य वलीमुखाः ।
जगृहुस्तं बबन्धुश्च विलपन्तमनाथवत् ॥ ३३

शुकस्तु वानरैश्चण्डैस्तत्र तैः संप्रपीडितः ।
व्याक्रोशत महात्मानं रामं दशरथात्मजम् ॥ ३४

लुप्येते मे बलात्पक्षौ भिद्येते च तथाक्षिणी ।
यां च रात्रिं मरिष्यामि जाये रात्रिं च यामहम् ॥ ३५

एतस्मिन्नन्तरे काले यन्मया ह्यशुभं कृतम् ।
सर्वं तदुपपद्येथा जह्यां चेद्यदि जीवितम् ॥ ३६

नाघातयत्तदा रामः श्रुत्वा तत्परिदेवनम् ।
वानरानब्रवीद्रामो मुच्यतां दूत आगतः ॥ ३७

इति विंशः सर्गः ॥



## एकविंशः सर्गः ॥

ततः सागरवेलायां दर्भानास्तीर्य राघवः ।
अञ्जलिं प्राङ्मुखः कृत्वा प्रतिशिश्ये महोदधिम् ॥ १

बाहुं भुजगभोगाभमुपधायारिसूदनः ।
जातरूपमयैश्चैव भूषणैर्भूषितं पुरा ॥ २

वरकाञ्चनकेयूरमुक्ताप्रवरभूषणैः ।
भुजैः परमनारीणामभिमृष्टमनेकधा ॥ ३

चन्दनागरुभिश्चैव पुरस्तादधिवासितम् ।
बालसूर्यप्रतीकाशैश्चन्दनैरुपशोभितम् ॥ ४

शयने चोत्तमाङ्गेन सीतायाः शोभितं पुरा ।
तक्षकस्येव संभोगं गङ्गाजलनिषेवितम् ॥ ५

संयुगे युगसङ्काशं शत्रूणां शोकवर्धनम् ।
सुहृदानन्दनं दीर्घं सागरान्तव्यपाश्रयम् ॥ ६

अस्यता च पुनः सव्यं ज्याघातविहतत्वचम् ।
दक्षिणो दक्षिणं बाहुं महापरिघसन्निभम् ॥ ७

गोसहस्रप्रदातारमुपधाय महद्भुजम् ।
अद्य मे मरणं वाऽथ तरणं सागरस्य वा ॥ ८

इति रामो मतिं कृत्वा महाबाहुर्महोदधिम् ।
अधिशिश्ये च विधिवत् प्रयतो नियतो मुनिः ॥ ९

तस्य रामस्य सुप्तस्य कुशास्तीर्णे महीतले ।
नियमादप्रमत्तस्य निशास्तिस्रोऽतिचक्रमुः ॥ १०

स त्रिरात्रोषितस्तत्र नयज्ञो धर्मवत्सलः ।
उपासत तदा रामः सागरं सरितां पतिम् ॥ ११

न च दर्शयते मन्दस्तदा रामस्य सागरः ।
प्रयतेनापि रामेण यथार्हमभिपूजितः ॥ १२

समुद्रस्य ततः क्रुद्धो रामो रक्तान्तलोचनः ।
समीपस्थमुवाचेदं लक्ष्मणं शुभलक्षणम् ॥ १३

अवलेपः समुद्रस्य न दर्शयति यत्स्वयम् ।
प्रशमश्च क्षमा चैव आर्जवं प्रियवादिता ॥ १४

असामर्थ्यं फलन्त्येते निर्गुणेषु सतां गुणाः ।
आत्मप्रशंसिनं दुष्टं धृष्टं विपरिधावकम् ॥ १५

सर्वत्रोत्सृष्टदण्डं च लोकः सत्कुरुते नरम् ।
न साम्ना शक्यते कीर्तिर्न साम्ना शक्यते यशः ॥ १६

प्राप्तुं लक्ष्मण लोकेऽस्मिञ्जयो वा रणमूर्धनि ।
अद्य मद्बाणनिर्भिन्नैर्मकरैर्मकरालयम् ॥ १७

निरुद्धतोयं सौमित्रे प्लवद्भिः पश्य सर्वतः ।
महाभोगानि मत्स्यानां करिणां च करानिह ॥ १८

भोगिनां पश्य नागानां मया छिन्नानि लक्ष्मण ।
सशङ्खशुक्तिकाजालं समीनमकरं शरैः ॥ १९

अद्य युद्धेन महता समुद्रं परिशोषये ।
क्षमया हि समायुक्तं मामयं मकरालयः ॥ २०

असमर्थं विजानाति धिक् क्षमामीदृशे जने ।
न दर्शयति साम्ना मे सागरो रूपमात्मनः ॥ २१

चापमानय सौमित्रे शरांश्चाशीविषोपमान् ।
सागरं शोषयिष्यामि पद्भ्यां यान्तु प्लवङ्गमाः ॥ २२

अद्याक्षोभ्यमपि क्रुद्धः क्षोभयिष्यामि सागरम् ।
वेलासु कृतमर्यादं सहस्रोर्मिसमाकुलम् ॥ २३

निर्मर्यादं करिष्यामि सायकैर्वरुणालयम् ।
महार्णवं क्षोभयिष्ये महादानवसंकुलम् ॥ २४

एवमुक्त्वा धनुष्पाणिः क्रोधविस्फारितेक्षणः ।
बभूव रामो दुर्धर्षो युगान्ताग्निरिव ज्वलन् ॥ २५

संपीड्य च धनुर्घोरं कम्पयित्वा शरैर्जगत् ।
मुमोच विशिखानुग्रान् वज्रानिव शतक्रतुः ॥ २६

ते ज्वलन्तो महावेगास्तेजसा सायकोत्तमाः ।
प्रविशन्ति समुद्रस्य सलिलं त्रस्तपन्नगम् ॥ २७

ततो वेगः समुद्रस्य सनक्रमकरो महान् ।
संबभूव महाघोरः समारुतरवस्तदा ॥ २८

महोर्मिमालावितत: शङ्खशुक्तिसमावृतः ।
सधूमपरिवृत्तोर्मिः सहसाऽऽसीन्महोदधिः ॥ २९

व्यथिताः पन्नगाश्चासन् दीप्तास्या दीप्तलोचनाः ।
दानवाश्च महावीर्याः पातालतलवासिनः ॥ ३०

ऊर्मयः सिन्धुराजस्य सनक्रमकरास्तदा ।
विन्ध्यमन्दरसङ्काशाः समुत्पेतुः सहस्रशः ॥ ३१

आघूर्णिततरङ्गौघः संभ्रान्तोरगराक्षसः ।
उद्वर्तितमहाग्राहः संवृत्तः सलिलाशयः ॥ ३२

ततस्तु तं राघवमुग्रवेगं
प्रकर्षमाणं धनुरप्रमेयम् ।

सौमित्रिरुत्पत्य विनिश्वसन्तं
मा मेति चोक्त्वा धनुराललम्बे ॥ ३३

एतद्विनाऽपि ह्युदधेस्तवाद्य
सम्पत्स्यते वीरतमस्य कार्यम् ।
भवद्विधाः कोपवशं न यान्ति
दीर्घं भवान् पश्यतु साधुवृत्तम् ॥ ३४

अन्तर्हितैश्चैव तथान्तरिक्षे
ब्रह्मर्षिभिश्चैव सुरर्षिभिश्च ।
शब्दः कृतः कष्टमिति ब्रुवद्भिः
मा मेति चोक्त्वा महता स्वरेण ॥ ३५

इति एकविंशः सर्गः ॥



# द्वाविंशः सर्गः ॥

अथोवाच रघुश्रेष्ठः सागरं दारुणं वचः ।
अद्य त्वां शोषयिष्यामि सपातालं महार्णव ॥ १

शरनिर्दग्धतोयस्य परिशुष्कस्य सागर ।
मया शोषितसत्वस्य पांसुरुत्पद्यते महान् ॥ २

मत्कार्मुकविसृष्टेन शरवर्षेण सागर ।
पारं तेऽद्य गमिष्यन्ति पद्भिरेव प्लवङ्गमाः ॥ ३

विचिन्वन्नाभिजानासि पौरुषं नाऽपि विक्रमम् ।
दानवालयसन्तापं मत्तो नाधि गमिष्यसि ॥ ४

ब्राह्मेणास्त्रेण संयोज्य ब्रह्मदण्डनिभं शरम् ।
संयोज्य धनुषि श्रेष्ठे विचकर्ष महाबलः ॥ ५

तस्मिन् विकृष्टे सहसा राघवेण शरासने ।
रोदसी संपफालेव पर्वताश्च चकम्पिरे ॥ ६

तमश्च लोकमावव्रे दिशश्च न चकाशिरे ।
प्रति चुक्षुभिरे चाशु सरांसि सरितस्तथा ॥ ७

तिर्यक्च सह नक्षत्रैः सङ्गतौ चन्द्रभास्करौ ।
तमसा सम्प्रति छन्नौ कृष्णेन महता तदा ॥ ८

भास्करांशुभिरादीप्तं तमसा च समावृतम् ।
प्रचकाशे तदाकाशमुल्काशतविदीपितम् ॥ ९

अन्तरिक्षाच्च निर्घाता निर्जग्मुरतुलस्वनाः ।
प्रववुश्च पुनर्दिव्या दिवि मारुतपङ्क्तयः ॥ १०

बभञ्ज च तदा वृक्षाञ्जलदानुद्वहन्नपि ।
अरुजंश्चैव शैलाग्रान् शिखराणि प्रभञ्जनः ॥ ११

दिवि च स्म महामेघाः सङ्गताः समहास्वनाः ।
मुमुचुर्वैद्युतानग्नींस्ते महाशनयस्तदा ॥ १२

यानि भूतानि दृश्यानि चुक्रुशुश्चाशनेः समम् ।
अदृश्यानि च भूतानि मुमुचुर्भैरवस्वनम् ॥ १३

शिश्यिरे चापि भूतानि सन्त्रस्तान्युद्विजन्ति च ।
सम्प्रविव्यथिरे चापि न च पस्पन्दिरे भयात् ॥ १४

सह भूतैः सतोयोर्मिः सनागः सह राक्षसः ।
सहसाऽभूत्ततो वेगाद्भीमवेगो महोदधिः ॥ १५

योजनं व्यतिचक्राम वेलामन्यत्र संप्लवात् ।
तं तदा समतिक्रान्तं नातिचक्राम राघवः ॥
समुद्धतममित्रघ्नो रामो नदनदीपतिम् ॥ १६

ततो मध्यात्समुद्रस्य सागरः स्वयमुत्थितः ।
उदयन्हि महाशैलान्मेरोरिव दिवाकरः ॥ १७

पन्नगैः सह दीप्तास्यैः समुद्रः प्रत्यदृश्यत ।
स्निग्धवैडूर्यसङ्काशो जाम्बूनदविभूषितः ॥ १८

रक्तमाल्याम्बरधरः पद्मपत्रनिभेक्षणः ।
सर्वपुष्पमयीं दिव्यां शिरसा धारयन्स्रजम् ॥ १९

जातरूपमयैश्चैव तपनीयविभूषितैः ।
आत्मजानां च रत्नानां भूषितो भूषणोत्तमैः ॥ २०

धातुभिर्मण्डितः शैलो विविधैर्हिमवानिव ॥ २१

एकावलीमध्यगतं तरलं पाटलप्रभम् ।
विपुलेनोरसा बिभ्रत् कौस्तुभस्य सहोदरम् ॥ २२

आघूर्णिततरङ्गौघः कालिकानिलसंकुलः ।
उद्वर्तितमहाग्राहः संभ्रान्तोरगराक्षसः ॥ २३

देवतानां सरूपाभिर्नानारूपाभिरीश्वरः ।
गङ्गासिन्धुप्रधानाभिरापगाभिः समावृतः ॥ २४

सागरः समुपक्रम्य पूर्वमामन्त्र्य वीर्यवान् ।
अब्रवीत्प्राञ्जलिर्वाक्यं राघवं शरपाणिनम् ॥ २५

पृथिवी वायुराकाशमापो ज्योतिश्च राघव ।
स्वभावे सौम्य तिष्ठन्ति शाश्वतं मार्गमाश्रिताः ॥ २६

तत्स्वभावो ममाप्येष यदगाधोऽहमप्लवः ।
विकारस्तु भवेद्गाध एतत्ते प्रवदाम्यहम् ॥ २७

न कामान्न च लोभाद्वा न भयात्पार्थिवात्मज ।
ग्राहनक्राकुलजलं स्तम्भयेयं कथञ्चन ॥ २८

विधास्ये राम येनापि विषहिष्ये ह्यहं तथा ।
ग्राहा न प्रहरिष्यन्ति यावत्सेना तरिष्यति ॥
हरीणां तरणे राम करिष्यामि यथा स्थलम् ॥ २९

तमब्रवीत्तदा राम उद्यतो हि नदीपते ।
अमोघोऽयं महाबाणः कस्मिन्देशे निपात्यताम् ॥ ३०

रामस्य वचनं श्रुत्वा तं च दृष्ट्वा महाशरम् ।
महोदधिर्महातेजा राघवं वाक्यमब्रवीत् ॥ ३१

उत्तरेणावकाशोऽस्ति कश्चित्पुण्यतमो मम ।
द्रुमकुल्य इति ख्यातो लोके ख्यातो यथा भवान् ॥ ३२

उग्रदर्शनकर्माणो बहवस्तत्र दस्यवः ।
आभीरप्रमुखाः पापाः पिबन्ति सलिलं मम ॥ ३३

तैर्न संस्पर्शनं पापैः सहेयं पापकर्मभिः ।
अमोघः क्रियतां राम ह्ययं तत्र शरोत्तमः ॥ ३४

तस्य तद्वचनं श्रुत्वा सागरस्य स राघवः ।
मुमोच तं शरं दीप्तं वीरः सागरदर्शनात् ॥ ३५

तेन तन्मरुकान्तारं पृथिव्यां खलु विश्रुतम् ।
निपातितः शरो यत्र दीप्ताशनिसमप्रभः ॥ ३६

ननाद च तदा तत्र वसुधा शल्यपीडिता ।
तस्माद्व्रणमुखात्तोयमुत्पपात रसातलात् ॥ ३७

स बभूव तदा कूपो व्रण इत्यभिविश्रुतः ॥
सततं चोत्थितं तोयं समुद्रस्येव दृश्यते । ३८

अवदारणशब्दश्च दारुणः समपद्यत ।
तस्मात्तद्बाणपातेन त्वपः कुक्षिष्वशोषयत् ॥ ३९

विख्यातं त्रिषु लोकेषु मरुकान्तारमेव तत् ॥ ४०

शोषयित्वा ततः कुक्षिं रामो दशरथात्मजः ।
वरं तस्मै ददौ विद्वान् मरवेऽमरविक्रमः ॥ ४१

पशव्यश्चाल्परोगश्च फलमूलरसायुतः ।
बहुस्नेहो बहुक्षीरसुगन्धिर्विविधौषधः ॥ ४२

एवमेतैर्गुणैर्युक्तो बहुभिः सततं मरुः ।
रामस्य वरदानाच्च शिवः पन्था बभूव ह ॥ ४३

तस्मिन्दग्धे तदा कुक्षौ समुद्रः सरितां पतिः ।
राघवं सर्वशास्त्रज्ञमिदं वचनमब्रवीत् ॥ ४४

अयं सौम्य नलो नाम तनुजो विश्वकर्मणः ।
पित्रा दत्तवरः श्रीमान् प्रतिमो विश्वकर्मणा ॥ ४५

एष सेतुं महोत्साहः करोतु मयि वानरः ।
तमहं धारयिष्यामि यथा ह्येष पिता तथा ॥ ४६

एवमुक्त्वोदधिर्नष्टः समुत्थाय नलस्तदा ।
अब्रवीद्वानरश्रेष्ठो वाक्यं रामं महाबलः ॥ ४७

अहं सेतुं करिष्यामि विस्तीर्णे वरुणालये ।
पितुः सामर्थ्यमास्थाय तत्त्वमाह महोदधिः ॥ ४८

दण्ड एव परो लोके पुरुषस्येति मे मतिः ।
धिक् क्षमामकृतज्ञेषु सान्त्वं दानमथापि वा ॥ ४९

अयं हि सागरो भीमः सेतुकर्मदिदृक्षया ।
ददौ दण्डभयाद्गाधं राघवाय महोदधिः ॥ ५०

मम मातुर्वरो दत्तो मन्दरे विश्वकर्मणा ।
औरसस्तस्य पुत्रोऽहं सदृशो विश्वकर्मणा ॥
न चाप्यहमनुक्तो वै प्रब्रूयामात्मनो गुणान् ॥ ५१

समर्थश्चाप्यहं सेतुं कर्तुं वै वरुणालये ।
काममद्यैव बध्नन्तु सेतुं वानरपुङ्गवाः ॥ ५२

ततो विसृष्टा रामेण सर्वतो हरियूथपाः ।
अभिपेतुर्महारण्यं हृष्टाः शतसहस्रशः ॥ ५३

ते नगान्नगसङ्काशाः शाखामृगगणर्षभाः ।
बभञ्जुर्वानरास्तत्र प्रचकर्षुश्च सागरम् ॥ ५४

ते सालैश्चाश्वकर्णैश्च धवैर्वंशैश्च वानराः ।
कुटजैरर्जुनैस्तालैस्तिलकैस्तिमिशैरपि ॥ ५५

बिल्वकैः सप्तपर्णैश्च कर्णिकारैश्च पुष्पितैः ।
चूतैश्चाशोकवृक्षैश्च सागरं समपूरयन् ॥ ५६

समूलांश्च विमूलांश्च पादपान् हरिसत्तमाः ।
इन्द्रकेतूनिवोद्यम्य प्रजह्रुर्हरयस्तरून् ॥ ५७

तालान्दाडिमगुल्मांश्च नारिकेळान्विभीतकान् ।
बकुलान् खदिरान्निम्बान् समाजह्रुरितस्ततः ॥ ५८

हस्तिमात्रान्महाकायाः पाषाणांश्च महाबलाः ।
पर्वतांश्च समुत्पाट्य यन्त्रैः परिवहन्ति च ॥ ५९

प्रक्षिप्यमाणैरचलैः सहसा जलमुद्धतम् ।
समुत्पतितमाकाशमुपासर्पत्ततस्ततः ॥ ६०

आप्लवन्तः प्लवन्तश्च गर्जन्तश्च प्लवङ्गमाः ।
समुद्रं क्षोभयामासुर्वानराश्च समन्ततः ॥
सूत्राण्यन्ये प्रगृह्णन्ति ह्यायतं शतयोजनम् ॥ ६१

नलश्चक्रे महासेतुं मध्ये नदनदीपतेः ।
स तथा क्रियते सेतुर्वानरैः शीघ्रकारिभिः ।
दण्डानन्ये प्रगृह्णन्ति विचिन्वन्ति तथा परे ॥ ६२

वानराः शतशस्तत्र रामस्याज्ञापुरःसराः ।
मेघाभैः पर्वताभैश्च तृणैः काष्ठैर्बबन्धिरे ॥
पुष्पिताग्रैश्च तरुभिः सेतुं बध्नन्ति वानराः ॥ ६३

पाषाणांश्च गिरिप्रख्यान् गिरीणां शिखराणि च ।
दृश्यन्ते परिधावन्तो गृह्य वारणसन्निभाः ॥ ६४

शिलानां क्षिप्यमाणानां शैलानां तत्र पात्यताम् ।
बभूव तुमुलः शब्दस्तदा तस्मिन्महोदधौ ॥ ६५

सहेलं हनुमाञ्शैलं यं यं विपुलमाक्षिपत् ।
तं तं करेण वामेन सलीलं जगृहे नलः ॥ ६६

कृतानि प्रथमेनाह्ना योजनानि चतुर्दश ।
प्रहृष्टैर्गजसङ्काशैस्त्वरमाणैः प्लवङ्गमैः ॥ ६७

द्वितीयेन तथा चाह्ना योजनानि तु विंशतिः ।
कृतानि प्लवगैस्तूर्णं भीमकायैर्महाबलैः ॥ ६८

अह्ना तृतीयेन तथा योजनानि कृतानि तु ।
त्वरमाणैर्महाकायैरेकविंशतिरेव च ॥ ६९

चतुर्थेन तथा चाह्ना द्वाविंशतिरथापि च ।
योजनानि महावेगैः कृतानि त्वरितैस्तु तैः ॥ ७०

पञ्चमेन तथा चाह्ना प्लवगैः क्षिप्रकारिभिः ।
योजनानि त्रयोविंशत् सुवेलमधिकृत्य वै ॥ ७१

स वानरवरः श्रीमान् विश्वकर्मात्मजो बली ।
बबन्ध सागरे सेतुं यथा चास्य पिता तथा ॥ ७२

स नलेन कृतः सेतुः सागरे मकरालये ।
शुशुभे सुभगः श्रीमान् स्वातीपथ इवाम्बरे ॥ ७३

ततो देवाः सगन्धर्वाः सिद्धाश्च परमर्षयः ।
आगम्य गगने तस्थुर्द्रष्टुकामास्तदद्भुतम् ॥ ७४

दशयोजनविस्तीर्णं शतयोजनमायतम् ।
ददृशुर्देवगन्धर्वा नलसेतुं सुदुष्करम् ॥ ७५

तदचिन्त्यमसह्यं च अद्भुतं रोमहर्षणम् ।
ददृशुः सर्वभूतानि सागरे सेतुबन्धनम् ॥ ७६

तानि कोटिसहस्राणि वानराणां महौजसाम् ।
बध्नन्तः सागरे सेतुं जग्मुः पारं महोदधेः ॥ ७७

विशालः सुकृतः श्रीमान् सुभूमिः सुसमाहितः ।
अशोभत महान्सेतुः सीमन्त इव सागरे ॥ ७८

ततः पारे समुद्रस्य गदापाणिर्विभीषणः ।
परेषामभिघातार्थमतिष्ठत्सचिवैः सह ॥ ७९

सुग्रीवस्तु ततः प्राह रामं सत्यपराक्रमम् ।
हनुमन्तं त्वमारोह ह्यङ्गदं चापि लक्ष्मणः ॥ ८०

अयं हि विपुलो वीर सागरो मकरालयः ।
वैहायसौ युवामेतौ वानरौ तारयिष्यतः ॥ ८१

अग्रतस्तस्य सैन्यस्य श्रीमान् रामः सलक्ष्मणः ।
जगाम धन्वी धर्मात्मा सुग्रीवेण समन्वितः ॥ ८२

अन्ये मध्येन गच्छन्ति पार्श्वतोऽन्ये प्लवङ्गमाः ।
सलिले प्रपतन्त्यन्ये मार्गमन्ये न लेभिरे ॥ ८३

केचिद्वैहायसगताः सुपर्णा इव पुप्लुवुः ॥ ८४

घोषेण महता घोषं सागरस्य समुच्छ्रितम् ।
भीममन्तर्दधे भीमा तरन्ती हरिवाहिनी ॥ ८५

वानराणां तु सा तीर्णा वाहिनी नलसेतुना ।
तीरे निविविशे रम्ये बहुमूलफलोदके ॥ ८६

तदद्भुतं राघवकर्म दुष्करं
समीक्ष्य देवाः सह सिद्धचारणैः ।
उपेत्य रामं सहिता महर्षिभिः
समभ्यषिञ्चन् सुशुभैर्जलैः पृथक् ॥ ८७

जयस्व शत्रून्नरदेव मेदिनीं
ससागरां पालय शाश्वतीः समाः ।
इतीव रामं नरदेवसत्कृतं
शुभैर्वचोभिर्विविधैरपूजयन् ॥ ८८

इति द्वाविंशः सर्गः ॥



# त्रयोविंशः सर्गः ॥

निमित्तानि निमित्तज्ञो दृष्ट्वा लक्ष्मणपूर्वजः ।
सौमित्रिं संपरिष्वज्य इदं वचनमब्रवीत् ॥ १

परिगृह्योदकं शीतं वनानि फलवन्ति च ।
बलौघं संविभज्येमं व्यूह्य तिष्ठेम लक्ष्मण ॥ २

लोकक्षयकरं भीमं भयं पश्याम्युपस्थितम् ।
निबर्हणं प्रवीराणामृक्षवानररक्षसाम् ॥ ३

वाताश्च कलुषा वान्ति कम्पते च वसुन्धरा ।
पर्वताग्राणि वेपन्ते पतन्ति च महीरुहाः ॥ ४

मेघाः क्रव्यादसङ्काशाः परुषाः परुषस्वनाः ।
क्रूराः क्रूरं प्रवर्षन्ति मिश्रं शोणितबिन्दुभिः ॥ ५

रक्तचन्दनसङ्काशा सन्ध्या परमदारुणा ।
ज्वलतः प्रपतत्येतदादित्यादग्निमण्डलम् ॥ ६

दीना दीनस्वराः क्रूराः सर्वतो मृगपक्षिणः ।
प्रत्यादित्यं विनर्दन्ति जनयन्तो महद्भयम् ॥ ७

रजन्यामप्रकाशस्तु सन्तापयति चन्द्रमाः ।
कृष्णरक्तांशुपर्यन्तो लोकक्षय इवोदितः ॥ ८

ह्रस्वो रूक्षोऽप्रशस्तश्च परिवेषः सुलोहितः ।
आदित्ये विमले नीलं लक्ष्म लक्ष्मण दृश्यते ॥ ९

रजसा महता चापि नक्षत्राणि हतानि च ।
युगान्तमिव लोकानां पश्य शंसन्ति लक्ष्मण ॥ १०

काकाः श्येनास्तथा गृध्राः नीचैः परिपतन्ति च ।
शिवाश्चाप्यशिवान्नादान् नदन्ति सुमहाभयान् ॥ ११

शैलैः शूलैश्च खड्गैश्च विसृष्टैः कपिराक्षसैः ।
भविष्यत्यावृता भूमिर्मांसशोणितकर्दमा ॥ १२

क्षिप्रमद्यैव दुर्धर्षां पुरीं रावणपालिताम् ।
अभियाम जवेनैव सर्वतो हरिभिर्वृताः ॥ १३

इत्येवमुक्त्वा धर्मात्मा धन्वी संग्रामहर्षणः ।
प्रतस्थे पुरतो रामो लङ्कामभिमुखो विभुः ॥ १४

सविभीषणसुग्रीवास्ततस्ते वानरर्षभाः ।
प्रतस्थिरे विनर्दन्तो निश्चिता द्विषतां वधे ॥ १५

राघवस्य प्रियार्थं तु धृतानां वीर्यशालिनाम् ।
हरीणां कर्मचेष्टाभिस्तुतोष रघुनन्दनः ॥ १६

इति त्रयोविंशः सर्गः ॥



# चतुर्विंशः सर्गः ॥

सा वीरसमिती राज्ञा विरराज व्यवस्थिता ।
शशिना शुभनक्षत्रा पौर्णमासीव शारदी ॥ १

प्रचचाल च वेगेन त्रस्ता चैव वसुन्धरा ।
पीड्यमाना बलौघेन तेन सागरवर्चसा ॥ २

ततः शुश्रुवुराकृष्टं लङ्कायां काननौकसः ।
भेरीमृदङ्गसंघुष्टं तुमुलं रोमहर्षणम् ॥ ३

बभूवुस्तेन घोषेण संहृष्टा हरियूथपाः ।
अमृष्यमाणास्तं घोषं विनेदुर्घोषवत्तरम् ॥ ४

राक्षसास्तु प्लवङ्गानां शुश्रुवुस्तेऽपि गर्जितम् ।
नर्दतामिव दृप्तानां मेघानामम्बरे स्वनम् ॥ ५

दृष्ट्वा दाशरथिर्लङ्कां चित्रध्वजपताकिनीम् ।
जगाम मनसा सीतां दूयमानेन चेतसा ॥ ६

अत्र सा मृगशावाक्षी रावणेनोपरुध्यते ।
अभिभूता ग्रहेणेव लोहिताङ्गेन रोहिणी ॥ ७

दीर्घमुष्णं च निःश्वस्य समुद्वीक्ष्य च लक्ष्मणम् ।
उवाच वचनं वीरस्तत्कालहितमात्मनः ॥ ८

आलिखन्तीमिवाकाशमुत्थितां पश्य लक्ष्मण ।
मनसेव कृतां लङ्कां नगाग्रे विश्वकर्मणा ॥ ९

विमानैर्बहुभिर्लङ्का सङ्कीर्णा भुवि राजते ।
विष्णोः पदमिवाकाशं छादितं पाण्डुरैर्घनैः ॥ १०

पुष्पितैः शोभिता लङ्का वनैश्चैत्ररथोपमैः ।
नानापतगसंघुष्टैः फलपुष्पोपगैः शुभैः ॥ ११

पश्य मत्तविहङ्गानि प्रलीनभ्रमराणि च ।
कोकिलाकुलषण्डानि दोधवीति शिवोऽनिलः ॥ १२

इति दाशरथी रामो लक्ष्मणं समभाषत ।
बलं च तद्वै विभजञ्शास्त्रदृष्टेन कर्मणा ॥ १३

शशास कपिसेनां तां बलमादाय वीर्यवान् ।
अङ्गदः सह नीलेन तिष्ठेदुरसि दुर्जयः ॥ १४

तिष्ठेद्वानरवाहिन्या वानरौघसमावृतः ।
आश्रितो दक्षिणं पार्श्वमृषभो वानरर्षभः ॥ १५

गन्धहस्तीव दुर्धर्षस्तरस्वी गन्धमादनः ।
तिष्ठेद्वानरवाहिन्याः सव्यं पार्श्वमधिष्ठितः ॥
मूर्ध्नि स्थास्याम्यहं यत्तो लक्ष्मणेन समन्वितः ॥ १६

जाम्बवांश्च सुषेणश्च वेगदर्शी च वानरः ।
ऋक्षमुख्या महात्मानः कुक्षिं रक्षन्तु ते त्रयः ॥ १७

जघनं कपिसेनायाः कपिराजोऽभिरक्षतु ।
पश्चार्धमिव लोकस्य प्रचेतास्तेजसा वृतः ॥ १८

सुविभक्तमहाव्यूहा महावानररक्षिता ।
अनीकिनी सा विबभौ यथा द्यौः साभ्रसंप्लवा ॥ १९

प्रगृह्य गिरिशृङ्गाणि महतश्च महीरुहान् ।
आसेदुर्वानरा लङ्कां विमर्दयिषवो रणे ॥ २०

शिखरैर्विकिरामैनां लङ्कां मुष्टिभिरेव वा ।
इति स्म दधिरे सर्वे मनांसि हरिसत्तमाः ॥ २१

ततो रामो महातेजाः सुग्रीवमिदमब्रवीत् ।
सुविभक्तानि सैन्यानि शुक एष विमुच्यताम् ॥ २

रामस्य वचनं श्रुत्वा वानरेन्द्रो महाबलः ।
मोचयामास तं दूतं शुकं रामस्य शासनात् ॥ २

मोचितो रामवाक्येन वानरैश्च निपीडितः ।
शुकः परमसन्त्रस्तो रक्षोऽधिपमुपागमत् ॥ २४

रावणः प्रहसन्नेव शुकं वाक्यमुवाच ह ॥
किमिमौ ते सितौ पक्षौ लूनपक्षश्च दृश्यसे ।
कच्चिन्नानेकचित्तानां तेषां त्वं वशमागतः ॥ २५

ततः स भयसंविग्नस्तथा राज्ञाभिचोदितः ।
वचनं प्रत्युवाचेदं राक्षसाधिपमुत्तमम् ॥ २६

सागरस्योत्तरे तीरेऽब्रुवं ते वचनं तथा ।
यथासन्देशमक्लिष्टं सान्त्वयञ्श्लक्ष्णया गिरा ॥ २७

क्रुद्धैस्तैरहमुत्प्लुत्य दृष्टमात्रैः प्लवङ्गमैः ।
गृहीतोऽस्म्यपि चारब्धो हन्तुं लोप्तुं च मुष्टिभिः ॥

नैव संभाषितुं शक्याः संप्रश्नोऽत्र न लभ्यते ।
प्रकृत्या कोपनास्तीक्ष्णा वानरा राक्षसाधिप ॥ २९

स च हन्ता विराधस्य कबन्धस्य खरस्य च ।
सुग्रीवसहितो रामः सीतायाः पदमागतः ॥ ३०

स कृत्वा सागरे सेतुं तीर्त्वा च लवणोदधिम् ।
एष रक्षांसि निर्धूय धन्वी तिष्ठति राघवः ॥ ३१

ऋक्षवानरसङ्घानामनीकानि सहस्रशः ।
गिरिमेघनिकाशानां छादयन्ति वसुन्धराम् ॥ ३२

राक्षसानां बलौघस्य वानरेन्द्रबलस्य च ।
नैतयोर्विद्यते सन्धिर्देवदानवयोरिव ॥ ३३

पुरा प्राकारमायान्ति क्षिप्रमेकतरं कुरु ।
सीतां वास्मै प्रयच्छाशु सुयुद्धं वा प्रदीयताम् ॥ ३४

शुकस्य वचनं श्रुत्वा रावणो वाक्यमब्रवीत् ।
रोषसंरक्तनयनो निर्दहन्निव चक्षुषा ॥ ३५

यदि मां प्रतियुद्ध्येरन् देवगन्धर्वदानवाः ।
नैव सीतां प्रदास्यामि सर्वलोकभयादपि ॥ ३६

कदा समभिधावन्ति राघवं मामकाः शराः ।
वसन्ते पुष्पितं मत्ता भ्रमरा इव पादपम् ॥ ३७

कदा तूणीशयैर्दीप्तैर्गणशः कार्मुकच्युतैः ।
शरैरादीपयाम्येनमुल्काभिरिव कुञ्जरम् ॥ ३८

तच्चास्य बलमादास्ये बलेन महता वृतः ।
ज्योतिषामिव सर्वेषां प्रभामुद्यन्दिवाकरः ॥ ३९

सागरस्येव मे वेगो मारुतस्येव मे गतिः ।
न हि दाशरथिर्वेद तेन मां योद्धुमिच्छति ॥ ४०

न मे तूणीशयान्बाणान् सविषानिव पन्नगान् ।
रामः पश्यति संग्रामे तेन मां योद्धुमिच्छति ॥
न जानाति पुरा वीर्यं मम युद्धे स राघवः ॥ ४१

मम चापमयीं वीणां शरकोणैः प्रवादिताम् ।
ज्याशब्दतुमुलां घोरामार्तभीतमहास्वनाम् ॥ ४२

नाराचतलसन्नादां तां ममाहितवाहिनीम् ।
अवगाह्य महारङ्गं वादयिष्याम्यहं रणे ॥ ४३

न वासवेनापि सहस्रचक्षुषा
युधाऽस्मि शक्यो वरुणेन वा पुनः ।
यमेन वा धर्षयितुं शराग्निना
महाहवे वैश्रवणेन वा पुनः ॥ ४४

इति चतुर्विंशः सर्गः ॥



# पञ्चविंशः सर्गः ॥

---

सबले सागरं तीर्णे रामे दशरथात्मजे ।
अमात्यौ रावणः श्रीमानब्रवीच्छुकसारणौ । १

समग्रं सागरं तीर्णं दुस्तरं वानरं बलम् ।
अभूतपूर्वं रामेण सागरे सेतुबन्धनम् ॥ २

सागरे सेतुबन्धं तन्न श्रद्दध्यां कथञ्चन ।
अवश्यं चापि संख्येयं तन्मया वानरं बलम् ॥ ३

भवन्तौ वानरं सैन्यं प्रविश्यानुपलक्षितौ ।
परिमाणं च वीर्यं च ये च मुख्याः प्लवङ्गमाः ॥ ४

मन्त्रिणो ये च रामस्य सुग्रीवस्य च सम्मताः ।
ये पूर्वमभिवर्तन्ते ये च शूराः प्लवङ्गमाः ॥ ५

स च सेतुर्यथा बद्धः सागरे सलिलार्णवे ।
निवेशं च यथा तेषां वानराणां महात्मनाम् ॥ ६

रामस्य व्यवसायं च वीर्यं प्रहरणानि च ।
लक्ष्मणस्य च वीरस्य तत्त्वतो ज्ञातुमर्हथः ॥ ७

कश्च सेनापतिस्तेषां वानराणां महौजसाम् ।
एतज्ज्ञात्वा यथातत्त्वं शीघ्रमागन्तुमर्हथः ॥ ८

इति प्रतिसमादिष्टौ राक्षसौ शुकसारणौ ।
हरिरूपधरौ वीरौ प्रविष्टौ वानरं बलम् ॥ ९

ततस्तद्वानरं सैन्यमचिन्त्यं रोमहर्षणम् ।
संख्यातुं नाध्यगच्छेतां तदा तौ शुकसारणौ ॥ १०

संस्थितं पर्वताग्रेषु निर्दरेषु गुहासु च ।
समुद्रस्य च तीरेषु वनेषूपवनेषु च ॥ ११

तरमाणं च तीर्णं च तर्तुकामं च सर्वशः ।
निविष्टं निविशच्चैव भीमनादं महाबलम् ॥
तद्बलार्णवमक्षोभ्यं ददृशाते निशाचरौ ॥ १२

तौ ददर्श महातेजाः प्रच्छन्नौ च विभीषणः ।
आचचक्षेऽथ रामाय गृहीत्वा शुकसारणौ ॥ १३

तस्येमौ राक्षसेन्द्रस्य मन्त्रिणौ शुकसारणौ ।
लङ्कायाः समनुप्राप्तौ चारौ परपुरञ्जय ॥ १४

तौ दृष्ट्वा व्यथितौ रामं निराशौ जीविते तदा ।
कृताञ्जलिपुटौ भीतौ वचनं चेदमूचतुः ॥ १५

आवामिहागतौ सौम्य रावणप्रहिताबुभौ ।
परिज्ञातुं बलं कृत्स्नं तवेदं रघुनन्दन ॥ १६

तयोस्तद्वचनं श्रुत्वा रामो दशरथात्मजः ।
अब्रवीत्प्रहसन्वाक्यं सर्वभूतहिते रतः ॥ १७

यदि दृष्टं बलं कृत्स्नं वयं वा सुपरीक्षिताः ।
यथोक्तं वा कृतं कार्यं छन्दतः प्रतिगम्यताम् ॥ १८

अथ किञ्चिददृष्टं वा भूयस्तद्द्रष्टुमर्हथः ।
विभीषणो वा कार्त्स्न्येन भूयः सन्दर्शयिष्यति ॥ १९

न चेदं ग्रहणं प्राप्य भेतव्यं जीवितं प्रति ।
न्यस्तशस्त्रौ गृहीतौ वा न दूतौ वधमर्हथः ॥ २०

पृच्छमानौ विमुञ्चैतौ चारौ रात्रिञ्चराबुभौ ।
शत्रुपक्षस्य सततं विभीषणविकर्षणौ ॥ २१

प्रविश्य नगरीं लङ्कां भवद्भ्यां धनदानुजः ।
वक्तव्यो रक्षसां राजा यथोक्तं वचनं मम ॥ २२

यद्बलं च समाश्रित्य सीतां मे हृतवानसि ।
तद्दर्शय यथाकामं ससैन्यः सहबान्धवः ॥ २३

श्वः काले नगरीं लङ्कां सप्राकारां सतोरणाम् ।
राक्षसं च बलं पश्य शरैर्विध्वंसितं मया ॥ २४

घोरं रोषमहं मोक्ष्ये बलं धारय रावण ।
श्वः काले वज्रवान्वज्रं दानवेष्विव वासवः ॥ २५

इति प्रतिसमादिष्टौ राक्षसौ शुकसारणौ ।
जयेति प्रतिनन्द्यैतौ राघवं धर्मवत्सलम् ॥ २६

आगम्य नगरीं लङ्कामब्रूतां राक्षसाधिपम् ॥ २७

विभीषणगृहीतौ तु वधार्हौ राक्षसेश्वर ।
दृष्ट्वा धर्मात्मना मुक्तौ रामेणामिततेजसा ॥ २८

एकस्थानगता यत्र चत्वारः पुरुषर्षभाः ।
लोकपालोपमाः शूराः कृतास्त्रा दृढविक्रमाः ॥ २९

रामो दाशरथिः श्रीमाँल्लक्ष्मणश्च विभीषणः ।
सुग्रीवश्च महातेजा महेन्द्रसमविक्रमः ॥ ३०

एते शक्ताः पुरीं लङ्कां सप्राकारां सतोरणाम् ।
उत्पाट्य संक्रामयितुं सर्वे तिष्ठन्तु वानराः ॥ ३१

यादृशं तस्य रामस्य रूपं प्रहरणानि च ।
वधिष्यति पुरीं लङ्कामेकस्तिष्ठन्तु ते त्रयः ॥ ३२

रामलक्ष्मणगुप्ता सा सुग्रीवेण च वाहिनी ।
बभूव दुर्धर्षतरा सर्वैरपि सुरासुरैः ॥ ३३

व्यक्तः सेतुस्तथा बद्धो दशयोजनविस्तृतः ।
शतयोजनमायामस्तीर्णा सेना च सागरम् ॥ ३४

निविष्टो दक्षिणे तीरे रामः स च नदीपतेः ।
तीर्णस्य तरमाणस्य बलस्यान्तो न विद्यते ॥ ३५

प्रहृष्टरूपा ध्वजिनी वनौकसां
महात्मनां सम्प्रति योद्धुमिच्छताम् ।
अलं विरोधेन शमो विधीयतां
प्रदीयतां दाशरथाय मैथिली ॥ ३६

इति पञ्चविंशः सर्गः ॥



## षड्विंशः सर्गः ॥

तद्वचः पथ्यमक्लीबं सारणेनाभिभाषितम् ।
निशम्य रावणो राजा प्रत्यभाषत सारणम् ॥ १

यदि मामभियुञ्जीरन् देवगन्धर्वदानवाः ।
नैव सीतां प्रदास्यामि सर्वलोकभयादपि ॥ २

त्वं तु सौम्य परित्रस्तो हरिभिस्तर्जितो भृशम् ।
प्रतिप्रदानमद्यैव सीतायाः साधु मन्यसे ॥ ३

को हि नाम सपत्नो मां समरे जेतुमर्हति ।
इत्युक्त्वा परुषं वाक्यं रावणो राक्षसाधिपः ॥ ४

आरुरोह ततः श्रीमान् प्रासादं हिमपाण्डरम् ।
बहुतालसमुत्सेधं रावणोऽथ दिदृक्षया ॥ ५

ताभ्यां चराभ्यां सहितो रावणः क्रोधमूर्च्छितः ।
पश्यमानः समुद्रं च पर्वतांश्च वनानि च ॥
ददर्श पृथिवीदेशं सुसंपूर्णं प्लवङ्गमैः ॥ ६

तदपारमसङ्ख्येयं वानराणां महद्बलम् ।
आलोक्य रावणो राजा परिपप्रच्छ सारणम् ॥ ७

एषां वानरमुख्यानां के शूराः के महाबलाः ।
के पूर्वमभिवर्तन्ते महोत्साहाः समन्ततः ॥ ८

केषां शृणोति सुग्रीवः के वा यूथपयूथपाः ।
सारणाचक्ष्व मे सर्वं के प्रधानाः प्लवङ्गमाः ॥ ९

सारणो राक्षसेन्द्रस्य वचनं परिपृच्छतः ।
आचचक्षेऽथ मुख्यज्ञो मुख्यांस्तत्र वनौकसः ॥ १०

एष योऽभिमुखो लङ्कां नर्दंस्तिष्ठति वानरः ।
यूथपानां सहस्राणां शतेन परिवारितः ॥ ११

यस्य घोषेण महता सप्राकारा सतोरणा ।
लङ्का प्रवेपते सर्वा सशैलवनकानना ॥ १२

सर्वशाखामृगेन्द्रस्य सुग्रीवस्य महात्मनः ।
बलाग्रे तिष्ठते वीरो नीलो नामैष यूथपः ॥ १३

बाहू प्रगृह्य यः पद्भ्यां महीं गच्छति वीर्यवान् ।
लङ्कामभिमुखः कोपादभीक्ष्णं च विजृम्भते ॥ १४

गिरिशृङ्गप्रतीकाशः पद्मकिञ्जल्कसन्निभः ।
स्फोटयत्यभिसंरब्धो लाङ्गूलं च पुनः पुनः ॥
यस्य लाङ्गूलशब्देन स्वनन्ति प्रदिशो दश ॥ १५

एष वानरराजेन सुग्रीवेणाभिषेचितः ।
यौवराज्येऽङ्गदो नाम त्वामाह्वयति संयुगे ॥ १६

वालिनः सदृशः पुत्रः सुग्रीवस्य सदा प्रियः ।
राघवार्थे पराक्रान्तः शक्रार्थे वरुणो यथा ॥ १७

एतस्य सा मतिः पूर्वा यद्दृष्टा जनकात्मजा ।
हनूमता वेगवता राघवस्य हितैषिणा ॥ १८

बहूनि वानरेन्द्राणामेष यूथानि वीर्यवान् ।
परिगृह्याभियाति त्वां स्वेनानीकेन दुर्जयः ॥ १९

अनु वालिसुतस्यापि बलेन महता वृतः ।
वीरस्तिष्ठति संग्रामे सेतुहेतुरयं नलः ॥ २०

ये तु विष्टभ्य गात्राणि क्ष्वेलयन्ति नदन्ति च ।
उत्थाय च विजृम्भन्ते क्रोधेन हरिपुङ्गवाः ॥ २१

एते दुष्प्रसहा घोराश्चण्डाश्चण्डपराक्रमाः ।
अष्टौ शतसहस्राणि दशकोटिशतानि च ॥ २२

य एनमनुगच्छन्ति धीराश्चन्दनवासिनः ।
एषैवाशंसते लङ्कां स्वेनानीकेन मर्दितुम् ॥ २३

श्वेतो रजतसङ्काशश्चपलो भीमविक्रमः ।
बुद्धिमान्वानरो वीरस्त्रिषु लोकेषु विश्रुतः ॥ २४

तूर्णं सुग्रीवमागम्य पुनर्गच्छति वानरः ।
विभजन्वानरीं सेनामनीकानि प्रहर्षयन् ॥ २५

यः पुरा गोमतीतीरे रम्यं पर्येति पर्वतम् ।
नाम्ना सङ्कोचको नाम नानानगायुतो गिरिः ॥ २६

तत्र राज्यं प्रशास्त्येषः कुमुदो नाम यूथपः ।
योऽसौ शतसहस्राणां सहस्रं परिकर्षति ॥ २७

यस्य वाला बहुव्यामा दीर्घा लाङ्गूलमाश्रिताः ।
ताम्राः पीताः सिताः श्वेताः प्रकीर्णा घोरकर्मणः ॥ २८

अदीनो रोषणश्चण्डः संग्राममभिकाङ्क्षति ।
एषैवाशंसते लङ्कां स्वेनानीकेन मर्दितुम् ॥ २९

यस्त्वेष सिंहसङ्काशः कपिलो दीर्घकेसरः ।
निभृतः प्रेक्षते लङ्कां दिधक्षन्निव चक्षुषा ॥ ३०

विन्ध्यं कृष्णगिरिं सह्यं पर्वतं च सुदर्शनम् ।
राजन् सततमध्यास्ते रम्भो नामैष यूथपः ॥ ३१

शतं शतसहस्राणां त्रिंशच्च हरियूथपाः ।
यमेते वानराः शूराश्चण्डाश्चण्डपराक्रमाः ॥
परिवार्यानुगच्छन्ति लङ्कां मर्दितुमोजसा ॥ ३२

यस्तु कर्णौ विवृणुते जृम्भते च पुनः पुनः ।
न च संविजते मृत्योर्न च यूथाद्विधावति ॥ ३३

प्रकम्पते च रोषेण तिर्यक् च पुनरीक्षते ।
पश्यँल्लाङ्गूलमपि च क्ष्वेलत्येष महाबलः ॥ ३४

महाबलो वीतभयो रम्यं साल्वेयपर्वतम् ।
राजन् सततमध्यास्ते शरभो नाम यूथपः ॥ ३५

एतस्य बलिनः सर्वे विहारा नाम यूथपाः ।
राजञ्शतसहस्राणि चत्वारिंशत्तथैव च ॥ ३६

यस्तु मेघ इवाकाशं महानावृत्य तिष्ठति ।
मध्ये वानरवीराणां सुराणामिव वासवः ॥ ३७

भेरीणामिव सन्नादो यस्यैष श्रूयते महान् ।
घोषः शाखामृगेन्द्राणां संग्राममभिकाङ्क्षताम् ॥ ३८

एष पर्वतमध्यास्ते पारियात्रमनुत्तमम् ।
युद्धे दुष्प्रसहो नित्यं पनसो नाम यूथपः ॥ ३९

एनं शतसहस्राणां शतार्धं पर्युपासते ।
यूथपा यूथपश्रेष्ठं येषां यूथानि भागशः ॥ ४०

यस्तु भीमां प्रवल्गन्तीं चमूं तिष्ठति शोभयन् ।
स्थितस्तीरे समुद्रस्य द्वितीय इव सागरः ॥ ४१

एष दर्दरसङ्काशो विनतो नाम यूथपः ।
पिबंश्चरति पर्णासां नदीनामुत्तमां नदीम् ॥ ४२

षष्टिः शतसहस्राणि बलमस्य प्लवङ्गमाः ।
त्वामाह्वयति युद्धाय क्रथनो नाम यूथपः ॥ ४३

विक्रान्ता बलवन्तश्च यथा यूथानि भागशः ।
यस्तु गैरिकवर्णाभं वपुः पुष्यति वानरः ॥ ४४

अवमत्य सदा सर्वान् वानरान्बलदर्पितान् ।
गवयो नाम तेजस्वी त्वां क्रोधादभिवर्तते ॥ ४५

एनं शतसहस्राणि सप्ततिः पर्युपासते ।
एषैवाशंसते लङ्कां स्वेनानीकेन मर्दितुम् ॥ ४६

शतं शतसहस्राणि दशकोटिशतानि च ।
हरीणां यूथपाः सन्ति बलिनां च महौजसाम् ॥ ४७

एते दुष्प्रसहा घोरा बलिनः कामरूपिणः ।
यूथपा यूथपश्रेष्ठा एषां यूथानि भागशः ॥ ४८

इति षड्विंशः सर्गः ॥



## सप्तविंशः सर्गः ॥

तांस्तु तेऽहं प्रवक्ष्यामि प्रेक्षमाणस्य यूथपान् ।
राघवार्थे पराक्रान्ता ये न रक्षन्ति जीवितम् ॥ १

स्निग्धा यस्य बहुव्यामा वाला लाङ्गूलमाश्रिताः ।
ताम्राः पीताः सिताः श्यामाः प्रकीर्णा घोरकर्मणः ॥

प्रगृहीताः प्रकाशन्ते सूर्यस्येव मरीचयः ।
पृथिव्यां चानुकृष्यन्ते हरो नामैष यूथपः ॥ ३

यं पृष्ठतोऽनुगच्छन्ति शतशोऽथ सहस्रशः ।
द्रुमानुद्यम्य सहसा लङ्कारोहणतत्पराः ॥ ४

एष कोटिसहस्रेण वानराणां महौजसाम् ।
आकाङ्क्षते त्वां संग्रामे जेतुं परपुरञ्जय ॥ ५

यूथपा हरिराजस्य किङ्कराः समुपस्थिताः ।
नीलानिव महामेघांस्तिष्ठतो यांस्तु पश्यसि ॥ ६

असिताञ्जनसङ्काशान् युद्धे सत्यपराक्रमान् ।
नखदंष्ट्रायुधान् वीरांस्तीक्ष्णकोपान् भयावहान् ॥
असंख्येयाननिर्देश्यान् परं पारमिवोदधेः ॥ ७

पर्वतेषु च ये केचिद्विषमेषु नदीषु च ।
एते त्वामभिवर्तन्ते राजन् ऋक्षाः सुदारुणाः ॥ ८

एषां मध्ये स्थितो राजन् भीमाक्षो भीमदर्शनः ।
पर्जन्य इव जीमूतैः समन्तात्परिवारितः ॥ ९

ऋक्षवन्तं गिरिश्रेष्ठमध्यास्ते नर्मदां पिबन् ।
सर्वर्क्षाणामधिपतिर्धूम्रो नामैष यूथपः ॥ १०

यवीयानस्य तु भ्राता पश्यैनं पर्वतोपमम् ।
भ्रात्रा समानो रूपेण विशिष्टस्तु पराक्रमे ॥ ११

स एष जाम्बवान्नाम महायूथपयूथपः ।
प्रशान्तो गुरुवर्ती च संप्रहारेष्वमन्त्रणः ॥ १२

एतेन साह्यं सुमहत् कृतं शक्रस्य धीमता ।
देवासुरे जाम्बवता लब्धाश्च बहवो वराः ॥ १३

आरुह्य पर्वताग्रेभ्यो महाभ्रविपुलाः शिलाः ।
मुञ्चन्ति विपुलाकारा न मृत्योरुद्विजन्ति च ॥ १४

राक्षसानां च सदृशाः पिशाचानां च रोमशाः ।
एतस्य सैन्या बहवो विचरन्त्यग्नितेजसः ॥ १५

यं त्वेनमभिसंरब्धं प्लवमानमवस्थितम् ।
प्रेक्षन्ते वानराः सर्वे स्थिता यूथपयूथपम् ॥ १६

एष राजन्सहस्राक्षं पर्युपास्ते हरीश्वरः ।
बलेन बलसम्पन्नो रम्भो नामैष यूथपः ॥ १७

यः स्थितं योजने शैलं गच्छन्पार्श्वेन सेवते ।
ऊर्ध्वं तथैव कायेन गतः प्राप्नोति योजनम् ॥ १८

यस्मान्न परमं रूपं चतुष्पादेषु विद्यते ।
श्रुतः सन्नादनो नाम वानराणां पितामहः ॥ १९

येन युद्धं पुरा दत्तं रणे शक्रस्य धीमता ।
पराजयश्च न प्राप्तः सोऽयं यूथपयूथपः ॥ २०

यस्य विक्रममाणस्य शक्रस्येव पराक्रमः ।
एष गन्धर्वकन्यायामुत्पन्नः कृष्णवर्त्मनः ॥ २१

तदा दैवासुरे युद्धे साह्यार्थं त्रिदिवौकसाम् ।
यत्र वैश्रवणो राजा जम्बूमुपनिषेवते ॥ २२

यो राजा पर्वतेन्द्राणां बहुकिन्नरसेविनाम् ।
विहारसुखदो नित्यं भ्रातुस्ते राक्षसाधिप ॥ २३

तत्रैव वसति श्रीमान् बलवान्वानरर्षभः ।
युद्धेष्वकत्थनो नित्यं क्रथनो नाम यूथपः ॥ २४

वृतः कोटिसहस्रेण हरीणां समुपस्थितः ।
एषैवाशंसते लङ्कां स्वेनानीकेन मर्दितुम् ॥ २५

यो गङ्गामनु पर्येति त्रासयन्हस्तियूथपान् ।
हस्तिनां वानराणां च पूर्ववैरमनुस्मरन् ॥ २६

एष यूथपतिर्नेता गच्छन् गिरिगुहाशयः ।
गजान्योधयते वन्यान् गिरींश्चैव महीरुहान् ॥ २७

हरीणां वाहिनीमुख्यो नदीं हैमवतीमनु ।
उशीरबीजमाश्रित्य पर्वतं मन्दरोपमम् ॥ २८

रमते वानरश्रेष्ठो दिवि शक्र इव स्वयम् ।
एनं शतसहस्राणां सहस्रमभिवर्तते ॥ २९

वीर्यविक्रमदृप्तानां नर्दतां बाहुशालिनाम् ।
स एष नेता चैतेषां वानराणां महात्मनाम् ॥ ३०

एष दुर्धर्षणो राजन् प्रमाथी नाम यूथपः ।
वातेनेवोद्धतं मेघं यमेनमनुपश्यसि ॥ ३१

अनीकमपि संरब्धं वानराणां तरस्विनाम् ।
उद्धूतमरुणाभासं पवनेन समन्ततः ॥ ३२

विवर्तमानं बहुशो यत्रैतद्बहुलं रजः ।
एतेऽसितमुखा घोरा गोलाङ्गूला महाबलाः ॥ ३३

शतं शतसहस्राणि दृष्ट्वा वै सेतुबन्धनम् ।
गोलाङ्गूलं महावेगं गवाक्षं नाम यूथपम् ॥ ३४

परिवार्याभिवर्तन्ते लङ्कां मर्दितुमोजसा ।
भ्रमराचरिता यत्र सर्वकालफलद्रुमाः ॥ ३५

यं सूर्यतुल्यवर्णाभमनु पर्येति पर्वतम् ।
यस्य भासा सदा भान्ति तद्वर्णा मृगपक्षिणः ॥
यस्य प्रस्थं महात्मानो न त्यजन्ति महर्षयः ॥ ३६

सर्वकामफला वृक्षाः सदा फलसमन्विताः ।
मधूनि च महार्हाणि यस्मिन्पर्वतसत्तमे ॥ ३७

तत्रैष रमते राजन् रम्ये काञ्चनपर्वते ।
मुख्यो वानरमुख्यानां केसरी नाम यूथपः ॥ ३८

षष्टिर्गिरिसहस्राणां रम्याः काञ्चनपर्वताः ।
तेषां मध्ये गिरिवरस्त्वमिवानघ रक्षसाम् ॥ ३९

तत्रैते कपिलाः श्वेतास्ताम्रास्या मधुपिङ्गलाः ।
निवसन्त्युत्तमगिरौ तीक्ष्णदंष्ट्रा नखायुधाः ॥ ४०

सिंहा इव चतुर्दंष्ट्रा व्याघ्रा इव दुरासदाः ।
सर्वे वैश्वानरसमा ज्वलिताशीविषोपमाः ॥ ४१

सुदीर्घाञ्चितलाङ्गूला मत्तमातङ्गसन्निभाः ।
महापर्वतसङ्काशा महाजीमूतनिःस्वनाः ॥ ४२

वृत्तपिङ्गलरक्ताक्षा भीमा भीमगतिस्वराः ।
मर्दयन्तीव ते सर्वे तस्थुर्लङ्कां समीक्ष्य ते ॥ ४३

एष चैषामधिपतिर्मध्ये तिष्ठति वीर्यवान् ।
जयार्थी नित्यमादित्यमुपतिष्ठति बुद्धिमान् ॥ ४४

नाम्ना पृथिव्यां विख्यातो राजञ्शतबलीति यः ।
एषैवाशंसते लङ्कां स्वेनानीकेन मर्दितुम् ॥ ४५

विक्रान्तो बलवाञ्शूरः पौरुषे स्वे व्यवस्थितः ।
रामप्रियार्थं प्राणानां दयां न कुरुते हरिः ॥ ४६

गजो गवाक्षो गवयो नलो नीलश्च वानरः ।
एकैक एव यूथानां कोटिभिर्दशभिर्वृतः ॥ ४७

तथाऽन्ये वानरश्रेष्ठा विन्ध्यपर्वतवासिनः ।
न शक्यं ते बहुत्वात्तु संख्यातुं लघुविक्रमाः ॥ ४८

सर्वे महाराज महाप्रभावाः
सर्वे महाशैलनिकाशकायाः ।
सर्वे समर्थाः पृथिवीं क्षणेन
कर्तुं प्रविध्वस्तविकीर्णशैलाम् ॥ ४९

इति सप्तविंशः सर्गः ॥



## अष्टाविंशः सर्गः ॥

सारणस्य वचः श्रुत्वा रावणं राक्षसाधिपम् ।
बलमादिश्य तत्सर्वं शुको वाक्यमथाब्रवीत् ॥ १

स्थितान्पश्यसि यानेतान् मत्तानिव महाद्विपान् ।
न्यग्रोधानिव गाङ्गेयान् सालान् हैमवतानिव ॥ २

एते दुष्प्रसहा राजन् बलिनः कामरूपिणः ।
दैत्यदानवसङ्काशा युद्धे देवपराक्रमाः ॥ ३

एषां कोटिसहस्राणि नव पञ्च च सप्त च ।
तथा शङ्कुसहस्राणि तथा बृन्दशतानि च ॥ ४

एते सुग्रीवसचिवाः किष्किन्धानिलयाः सदा ।
हरयो देवगन्धर्वैरुत्पन्नाः कामरूपिणः ॥ ५

यौ तौ पश्यसि तिष्ठन्तौ कुमारौ देवरूपिणौ ।
मैन्दश्च द्विविदश्चोभौ ताभ्यां नास्ति समो युधि ॥ ६

ब्रह्मणा समनुज्ञातावमृतप्राशिनावुभौ ।
आशंसेते युधा लङ्कामेतौ मर्दितुमोजसा ॥ ७

यावेतावेतयोः पार्श्वे स्थितौ पर्वतसन्निभौ ।
सुमुखोऽसुमुखश्चैव मृत्युपुत्रौ पितुः समौ ॥
प्रेक्षन्तौ नगरीं लङ्कां कोटिभिर्दशभिर्वृतौ ॥ ८

यं तु पश्यसि तिष्ठन्तं प्रभिन्नमिव कुञ्जरम् ।
यो बलात्क्षोभयेत्क्रुद्धः समुद्रमपि वानरः ॥ ९

एषोऽभिगन्ता लङ्काया वैदेह्यास्तव च प्रभो ।
एनं पश्य पुरा दृष्टं वानरं पुनरागतम् ॥ १०

ज्येष्ठः केसरिणः पुत्रो वातात्मज इति श्रुतः ।
हनुमानिति विख्यातो लङ्घितो येन सागरः ॥ ११

कामरूपी हरिश्रेष्ठो बलरूपसमन्वितः ।
अनिवार्यगतिश्चैव यथा सततगः प्रभुः ॥ १२

उद्यन्तं भास्करं दृष्ट्वा बालः किल पिपासितः ।
त्रियोजनसहस्रं तु अध्वानमवतीर्य हि ॥ १३

आदित्यमाहरिष्यामि न मे क्षुत्प्रतियास्यति ।
इति निश्चित्य मनसा पुप्लुवे बलदर्पितः ॥ १४

अनाधृष्यतमं देवमपि देवर्षिदानवैः ।
अनासाद्यैव पतितो भास्करोदयने गिरौ ॥ १५

पतितस्य कपेरस्य हनुरेका शिलातले ।
किञ्चिद्भिन्ना दृढहनोर्हनुमानेष तेन वै ॥ १६

सत्यमागमयोगेन ममैष विदितो हरिः ।
नास्य शक्यं बलं रूपं प्रभावो वाऽनुभाषितुम् ॥ १७

एष आशंसते लङ्कामेको मर्दितुमोजसा ।
येन जाज्वल्यते सौम्य धूमकेतुस्तवाद्य वै ।
लङ्कायां निहितश्चापि कथं विस्मरसे कपिम् ॥ १८

यश्चैषोऽनन्तरः शूरः श्यामः पद्मनिभेक्षणः ।
इक्ष्वाकूणामतिरथो लोके विख्यातपौरुषः ॥ १९

यस्मिन्न चलते धर्मो यो धर्मं नातिवर्तते ।
यो ब्राह्ममस्त्रं वेदांश्च वेद वेदविदां वरः ॥ २०

यो भिन्द्याद्गगनं बाणैर्मेदिनीं चापि दारयेत् ।
यस्य मृत्योरिव क्रोधः शक्रस्येव पराक्रमः ॥ २१

यस्य भार्या जनस्थानात् सीता चापहृता त्वया ।
स एष रामस्त्वां योद्धुं राजन्समभिवर्तते ॥ २२

यस्यैष दक्षिणे पार्श्वे शुद्धजाम्बूनदप्रभः ।
विशालवक्षास्ताम्राक्षो नीलकुञ्चितमूर्धजः ॥ २३

एषोऽस्य लक्ष्मणो नाम भ्राता प्राणसमः प्रियः ।
नये युद्धे च कुशलः सर्वशास्त्रविशारदः ॥ २४

अमर्षी दुर्जयो जेता विक्रान्तो बुद्धिमान्बली ।
रामस्य दक्षिणो बाहुर्नित्यं प्राणो बहिश्चरः ॥ २५

न ह्येष राघवस्यार्थे जीवितं परिरक्षति ।
एषैवाशंसते युद्धे निहन्तुं सर्वराक्षसान् ॥ २६

यस्तु सव्यमसौ पक्षं रामस्याश्रित्य तिष्ठति ।
रक्षोगणपरिक्षिप्तो राजा ह्येष विभीषणः ॥ २७

श्रीमता राजराजेन लङ्कायामभिषेचितः ।
त्वामेव प्रतिसंरब्धो युद्धायैषोऽभिवर्तते ॥ २८

यं तु पश्यसि तिष्ठन्तं मध्ये गिरिमिवाचलम् ।
सर्वशाखामृगेन्द्राणां भर्तारमपराजितम् ॥ २९

तेजसा यशसा बुद्ध्या ज्ञानेनाभिजनेन च ।
यः कपीनतिबभ्राज हिमवानिव पर्वतः ॥ ३०

किष्किन्धां यः समध्यास्ते गुहां सगहनद्रुमाम् ।
दुर्गां पर्वतमध्यस्थां प्रधानैः सह यूथपैः ॥ ३१

यस्यैषा काञ्चनी माला शोभते शतपुष्करा ।
कान्ता देवमनुष्याणां यस्यां लक्ष्मीः प्रतिष्ठिता ॥ ३२

एतां च मालां तारां च कपिराज्यं च शाश्वतम् ।
सुग्रीवो वालिनं हत्वा रामेण प्रतिपादितः ॥ ३३

शतं शतसहस्राणां कोटिमाहुर्मनीषिणः ।
शतं कोटिसहस्राणां शङ्कुरित्यभिधीयते ॥ ३४

शतं शङ्कुसहस्राणां महाशङ्कुरितिस्मृतः ।
महाशङ्कुसहस्राणां शतं बृन्दमिवोच्यते ॥ ३५

शतं बृन्दसहस्राणां महाबृन्दमिति स्मृतम् ।
महाबृन्दसहस्राणां शतं पद्ममिति स्मृतम् ॥ ३६

शतं पद्मसहस्राणां महापद्ममिति श्रुतम् ।
महापद्मसहस्राणां शतं खर्वमिहोच्यते ॥ ३७

शतं खर्वसहस्राणां महाखर्वमिति श्रुतम् ।
महाखर्वसहस्राणां समुद्रमभिधीयते ॥ ३८

शतं समुद्रसाहस्रमोघ इत्यभिधीयते ।
शतमोघसहस्राणां महौघ इति विश्रुतः ॥ ३९

एवं कोटिसहस्रेण शङ्कूनां च शतेन च ।
महाशङ्कुसहस्रेण तथा बृन्दशतेन च ॥ ४०

महाबृन्दसहस्रेण तथा पद्मशतेन च ।
महापद्मसहस्रेण तथा खर्वशतेन च ॥ ४१

समुद्रेण शतेनैव महौघेन तथैव च ।
एष कोटिमहौघेन समुद्रसदृशेन च ॥ ४२

विभीषणेन सचिवै राक्षसैः परिवारितः ।
सुग्रीवो वानरेन्द्रस्त्वां युद्धार्थमभिवर्तते ॥
महाबलवृतो नित्यं महाबलपराक्रमः ॥ ४३

इमां महाराज समीक्ष्य वाहिनी-
मुपस्थितां प्रज्वलितग्रहोपमाम् ।

ततः प्रयत्नः परमो विधीयतां
यथा जयः स्यान्न परैः पराजयः ॥ ४४

इति अष्टाविंशः सर्गः ॥



## एकोनत्रिंशः सर्गः ॥

शुकेन तु समाख्यातांस्तान्दृष्ट्वा हरियूथपान् ।
समीपस्थं च रामस्य भ्रातरं स्वं विभीषणम् ॥ १

लक्ष्मणं च महावीर्यं भुजं रामस्य दक्षिणम् ।
सर्ववानरराजं च सुग्रीवं भीमविक्रमम् ॥ २

गजं गवाक्षं गवयं मैन्दं द्विविदमेव च ।
अङ्गदं चापि बलिनं वज्रहस्तात्मजात्मजम् ॥ ३

हनूमन्तं च विक्रान्तं जाम्बवन्तं च दुर्जयम् ।
सुषेणं कुमुदं नीलं नलं च प्लवगर्षभम् ॥ ४

किञ्चिदाविग्नहृदयो जातक्रोधश्च रावणः ।
भर्त्सयामास तौ वीरौ कथान्ते शुकसारणौ ॥ ५

अधोमुखौ तौ प्रणतावब्रवीच्छुकसारणौ ।
रोषगद्गदया वाचा संरब्धः परुषं तदा ॥ ६

न तावत्सदृशं नाम सचिवैरुपजीविभिः ।
विप्रियं नृपतेर्वक्तुं निग्रहप्रग्रहे विभोः ॥ ७

रिपूणां प्रतिकूलानां युद्धार्थमभिवर्तताम् ।
उभाभ्यां सदृशं नाम वक्तुमप्रस्तवे स्तवम् ॥ ८

आचार्या गुरवो वृद्धा वृथा वां पर्युपासिताः ।
सारं यद्राजशास्त्राणामनुजीव्यं न गृह्यते ॥ ९

गृहीतो वा न विज्ञातो भारो ज्ञानस्य वोह्यते ।
ईदृशैः सचिवैर्युक्तो मूर्खैर्दिष्ट्या धराम्यहम् ॥ १०

किं नु मृत्योर्भयं नास्ति वक्तुं मां परुषं वचः ।
यस्य मे शासतो जिह्वा प्रयच्छति शुभाशुभम् ॥ ११

अप्येव दहनं स्पृष्ट्वा वने तिष्ठन्ति पादपाः ।
राजदोषपरामृष्टास्तिष्ठन्ते नापराधिनः ॥ १२

हन्यामहं त्विमौ पापौ शत्रुपक्षप्रशंसकौ ।
यदि पूर्वोपकारैस्तु न क्रोधो मृदुतां व्रजेत् ॥ १३

अपध्वंसत गच्छध्वं सन्निकर्षादितो मम ।
न हि वां हन्तुमिच्छामि स्मराम्युपकृतानि वाम् ॥ १४

हतावेव कृतघ्नौ तौ मयि स्नेहपराङ्मुखौ ।
एवमुक्तौ तु सव्रीडौ तावुभौ शुकसारणौ ॥ १५

रावणं जयशब्देन प्रतिनन्द्याभिनिःसृतौ ।
अब्रवीत्स दशग्रीवः समीपस्थं महोदरम् ॥ १६

उपस्थापय शीघ्रं मे चारानिति निशाचरम् ।
महोदरस्तथोक्तस्तु शीघ्रमाज्ञापयच्चरान् ॥ १७

ततश्चाराः संत्वरिताः प्राप्ताः पार्थिवशासनात् ।
उपस्थिताः प्राञ्जलयो वर्धयित्वा जयाशिषा ॥ १८

तानब्रवीत्ततो वाक्यं रावणो राक्षसाधिपः ।
चारान्प्रत्यायिताञ्शूरान् भक्तान्विगतसाध्वसान् ॥ १९

इतो गच्छत रामस्य व्यवसायं परीक्षथ ।
मन्त्रिष्वभ्यन्तरा येऽस्य प्रीत्या येन समागताः ॥ २०

कथं स्वपिति जागर्ति किमन्यच्च करिष्यति ।
विज्ञाय निपुणं सर्वमागन्तव्यमशेषतः ॥ २१

चारेण विदितः शत्रुः पण्डितैर्वसुधाधिपैः ।
युद्धे स्वल्पेन यत्नेन समासाद्य निरस्यते ॥ २२

चारास्तु ते तथेत्युक्त्वा प्रहृष्टा राक्षसेश्वरम् ।
शार्दूलमग्रतः कृत्वा ततश्चक्रुः प्रदक्षिणम् ॥ २३

ततस्ते तं महात्मानं चारा राक्षससत्तमम् ।
कृत्वा प्रदक्षिणं जग्मुर्यत्र रामः सलक्ष्मणः ॥ २४

ते सुवेलस्य शैलस्य समीपे रामलक्ष्मणौ ।
प्रच्छन्ना ददृशुर्गत्वा ससुग्रीवविभीषणौ ॥ २५

प्रेक्षमाणाश्चमूं तां च बभूवुर्भयविक्लवाः ।
ते तु धर्मात्मना दृष्टा राक्षसेन्द्रेण राक्षसाः ॥ २६

विभीषणेन तत्रस्था निगृहीता यदृच्छया ।
शार्दूलो ग्राहितस्त्वेकः पापोऽयमिति राक्षसः ॥ २७

गृहीतः पीडितश्चैव वानरैर्बहुभिर्वृतः ।
मोचितः सोऽपि रामेण वध्यमानः प्लवङ्गमैः ॥ २८

आनृशंस्येन रामेण मोचिता राक्षसाः परे ।
वानरैरर्दितास्ते तु विक्रान्तैर्लघुविक्रमैः ।
पुनर्लङ्कामनुप्राप्ताः श्वसन्तो नष्टचेतसः ॥ २९

ततो दशग्रीवमुपस्थितास्तु ते
चारा बहिर्नित्यचरा निशाचराः ।
गिरेः सुवेलस्य समीपवासिनं
न्यवेदयन्भीमबलं महाबलाः ॥ ३०

इति एकोनत्रिंशः सर्गः ॥



## त्रिंशः सर्गः ॥

ततस्तमक्षोभ्यबलं लङ्काधिपतये चराः ।
सुवेले राघवं शैले निविष्टं प्रत्यवेदयन् ॥ १

चाराणां रावणः श्रुत्वा प्राप्तं रामं महाबलम् ।
जातोद्वेगोऽभवत्किञ्चिच्छार्दूलं वाक्यमब्रवीत् ॥ २

अयथावच्च ते वर्णो दीनश्चासि निशाचर ।
नासि कच्चिदमित्राणां क्रुद्धानां वशमागतः ॥ ३

इति तेनानुशिष्टस्तु वाचं मन्दमुदीरयत् ।
तदा राक्षसशार्दूलं शार्दूलो भयविह्वलः ॥ ४

न ते चारयितुं शक्या राजन्वानरपुङ्गवाः ।
विक्रान्ता बलवन्तश्च राघवेण च रक्षिताः ॥ ५

नापि संभाषितुं शक्याः संप्रश्नोऽत्र न लभ्यते ।
सर्वतो रक्ष्यते पन्था वानरैः पर्वतोपमैः ॥ ६

प्रविष्टमात्रे ज्ञातोऽहं बले तस्मिन्नचारिते ।
बलाद्गृहीतो रक्षोभिर्बहुधाऽस्मि विदारितः ॥ ७

जानुभिर्मुष्टिभिर्दन्तैस्तलैश्चाभिहतो भृशम् ।
परिणीतोऽस्मि हरिभिर्बलवद्भिरमर्षणैः ॥ ८

परिणीय च सर्वत्र नीतोऽहं रामसंसदम् ।
रुधिरादिग्धसर्वाङ्गो विह्वलश्चलितेन्द्रियः ॥ ९

हरिभिर्वध्यमानश्च याचमानः कृताञ्जलिः ।
राघवेण परित्रातो जीवामीति यदृच्छया ॥ १०

एष शैलैः शिलाभिश्च पूरयित्वा महार्णवम् ।
द्वारमाश्रित्य लङ्काया रामस्तिष्ठति सायुधः ॥ ११

गारुडं व्यूहमास्थाय सर्वतो हरिभिर्वृतः ।
मां विसृज्य महातेजा लङ्कामेवाभिवर्तते ॥ १२

पुरा प्राकारमायाति क्षिप्रमेकतरं कुरु ।
सीतां वाऽस्मै प्रयच्छाशु सुयुद्धं वा प्रदीयताम् ॥ १३

मनसा स ततापाथ तच्छ्रुत्वा राक्षसाधिपः ।
शार्दूलस्य महद्वाक्यमथोवाच स रावणः ॥ १४

यदि मां प्रति युद्ध्यन्ते देवगन्धर्वदानवाः ।
नैव सीतां प्रदास्यामि सर्वलोकभयादपि ॥ १५

एवमुक्त्वा महातेजा रावणः पुनरब्रवीत् ।
चारिता भवता सेना केऽत्र शूराः प्लवङ्गमाः ॥ १६

कीदृशाः किंप्रभाः सौम्य वानरा ये दुरासदाः ।
कस्य पुत्राश्च पौत्राश्च तत्वमाख्याहि राक्षस ॥ १७

तथाऽत्र प्रतिपत्स्यामि ज्ञात्वा तेषां बलाबलम् ।
अवश्यं बलसंख्यानं कर्तव्यं युद्धमिच्छताम् ॥ १८

अथैवमुक्तः शार्दूलो रावणेनोत्तमश्चरः ।
इदं वचनमारेभे वक्तुं रावणसन्निधौ ॥ १९

अथर्क्षरजसः पुत्रो युधि राजा सुदुर्जयः ।
गद्गदस्याथ पुत्रोऽत्र जाम्बवानिति विश्रुतः ॥ २०

गद्गदस्यैव पुत्रोऽन्यो गुरुपुत्रः शतक्रतोः ।
कदनं यस्य पुत्रेण कृतमेकेन रक्षसाम् ॥ २१

सुषेणश्चात्र धर्मात्मा पुत्रो धर्मस्य वीर्यवान् ।
सौम्यः सोमात्मजश्चात्र राजन्दधिमुखः कपिः ॥ २२

सुमुखो दुर्मुखश्चात्र वेगदर्शी च वानरः ।
मृत्युर्वानररूपेण नूनं सृष्टः स्वयंभुवा ॥ २३

पुत्रो हुतवहस्याथ नीलः सेनापतिः स्वयम् ।
अनिलस्य च पुत्रोऽत्र हनुमानिति विश्रुतः ॥ २४

नप्ता शक्रस्य दुर्धर्षो बलवानङ्गदो युवा ।
मैन्दश्च द्विविदश्चोभौ बलिनावश्विसंभवौ ॥ २५

पुत्रा वैवस्वतस्यात्र पञ्च कालान्तकोपमाः ।
गजो गवाक्षो गवयः शरभो गन्धमादनः ॥ २६

दश वानरकोट्योऽत्र शूराणां युद्धकाङ्क्षिणाम् ।
श्रीमतां देवपुत्राणां शेषान्नाख्यातुमुत्सहे ॥ २७

पुत्रो दशरथस्यैष सिंहसंहननो युवा ।
दूषणो निहतो येन खरश्च त्रिशिरास्तथा ॥ २८

नास्ति रामस्य सदृशो विक्रमे भुवि कश्चन ।
विराधो निहतो येन कबन्धश्चान्तकोपमः ॥ २९

वक्तुं न शक्तो रामस्य नरः कश्चिद्गुणान् क्षितौ ।
जनस्थानगता येन यावन्तो राक्षसा हताः ॥ ३०

लक्ष्मणश्चात्र धर्मात्मा मातङ्गानामिवर्षभः ।
यस्य बाणपथं प्राप्य न जीवेदपि वासवः ॥ ३१

श्वेतो ज्योतिर्मुखश्चात्र भास्करस्यात्मसंभवौ ।
वरुणस्य च पुत्रोऽथ हेमकूटः प्लवङ्गमः ॥ ३२

विश्वकर्मसुतो वीरो नलः प्लवगसत्तमः ।
विक्रान्तो बलवानत्र वसुपुत्रः सुदुर्धरः ॥ ३३

राक्षसानां वरिष्ठश्च तव भ्राता विभीषणः ।
प्रतिगृह्य पुरीं लङ्कां राघवस्य हिते रतः ॥ ३४

इति सर्वं समाख्यातं तवेदं वानरं बलम् ।
सुवेलेऽधिष्ठितं शैले शेषकार्ये भवान् गतिः ॥ ३५

इति त्रिंशः सर्गः ॥



# एकत्रिंशः सर्गः ॥

ततस्तमक्षोभ्यबलं लङ्काधिपतये चराः ।
सुवेले राघवं शैले निविष्टं प्रत्यवेदयन् ॥ १

चाराणां रावणः श्रुत्वा प्राप्तं रामं महाबलम् ।
जातोद्वेगोऽभवत्किञ्चित् सचिवानिदमब्रवीत् ॥ २

मन्त्रिणः शीघ्रमायान्तु सर्वे वै सुसमाहिताः ।
अयं नो मन्त्रकालो हि संप्राप्त इति राक्षसाः ॥ ३

तस्य तच्छासनं श्रुत्वा मन्त्रिणोऽभ्यागमन्द्रुतम् ।
ततः स मन्त्रयामास सचिवै राक्षसैः सह ॥ ४

मन्त्रयित्वा सुदुर्धर्षः क्षमं यत्समनन्तरम् ।
विसर्जयित्वा सचिवान् प्रविवेश स्वमालयम् ॥ ५

ततो राक्षसमाहूय विद्युज्जिह्वं महाबलम् ।
मायाविदं महामायः प्राविशद्यत्र मैथिली ॥ ६

विद्युज्जिह्वं च मायाज्ञमब्रवीद्राक्षसाधिपः ।
मोहयिष्यावहे सीतां मायया जनकात्मजाम् ॥ ७

शिरो मायामयं गृह्य राघवस्य निशाचर ।
त्वं मां समुपतिष्ठस्व महच्च सशरं धनुः ॥ ८

एवमुक्तस्तथेत्याह विद्युज्जिह्वो निशाचरः ।
तस्य तुष्टोऽभवद्राजा प्रददौ च विभूषणम् ॥ ९

अशोकवनिकायां तु सीतादर्शनलालसः ।
नैर्ऋतानामधिपतिः संविवेश महाबलः ॥ १०

ततो दीनामदीनार्हां ददर्श धनदानुजः ।
अधोमुखीं शोकपरामुपविष्टां महीतले ॥ ११

भर्तारमेव ध्यायन्तीमशोकवनिकां गताम् ।
उपास्यमानां घोराभी राक्षसीभिरितस्ततः ॥ १२

राक्षसीभिर्वृतां सीतां पूर्णचन्द्रनिभाननाम् ।
उत्पातमेघराजीभिश्चन्द्ररेखामिवावृताम् ॥ १३

भूषणावयवैः कैश्चिन्मङ्गलार्थमलंकृताम् ।
वसन्ते मारुतोद्धूतां क्षिप्तां पुष्पलतामिव ॥ १४

हर्षशोकान्तरे मग्नां विषादास्राविलेक्षणाम् ।
स्तिमितामिव गम्भीर्यान्नदीं भागीरथीमिव ॥ १५

उपसृत्य ततः सीतां प्रहर्षं नाम कीर्तयन् ।
अधोमुखस्थितां बालामुपविष्टां पराङ्मुखीम् ॥
इदं च वचनं धृष्टमुवाच जनकात्मजाम् ॥ १६

सान्त्व्यमाना मया भद्रं यमुपाश्रित्य वल्गसे ।
खरहन्ता स ते भर्ता राघवः समरे हतः ॥ १७

छिन्नं ते सर्वतो मूलं दर्पस्ते विहतो मया ।
व्यसनेनात्मनः सीते मम भार्या भविष्यसि ॥ १८

विसृजैतां मतिं मूढे किं मृतेन करिष्यसि ।
भवस्व भद्रे भार्याणां सर्वासामीश्वरी मम ॥ १९

अल्पपुण्ये निवृत्तार्थे मूढे पण्डितमानिनि ।
शृणु भर्तृवधं सीते घोरं वृत्रवधं यथा ॥ २०

समायातः समुद्रान्तं मां हन्तुं किल राघवः ।
वानरेन्द्रप्रणीतेन बलेन महता वृतः ॥ २१

सन्निविष्टः समुद्रस्य पीड्य तीरमथोत्तरम् ।
बलेन महता रामो व्रजत्यस्तं दिवाकरे ॥ २२

अथाध्वनि परिश्रान्तमर्धरात्रे स्थितं बलम् ।
सुखसुप्तं समासाद्य चारितं प्रथमं चरैः ॥ २३

तत्प्रहस्तप्रणीतेन बलेन महता मम ।
बलमस्य हतं रात्रौ यत्र रामः सलक्ष्मणः ॥ २४

पट्टसान्परिघांश्चक्रान् दण्डान् खड्गान्महायसान् ।
बाणजालानि शूलानि भास्वरान् कूटमुद्गरान् ॥ २५

यष्टीश्च तोमराञ्शक्तीश्चक्राणि मुसलानि च ।
उद्यम्योद्यम्य रक्षोभिर्वानरेषु निपातिताः ॥ २६

अथ सुप्तस्य रामस्य प्रहस्तेन प्रमाथिना ।
असक्तं कृतहस्तेन शिरश्छिन्नं महासिना ॥ २७

विभीषणः समुत्पत्य निगृहीतो यदृच्छया ।
दिशः प्रव्राजितः सर्वैर्लक्ष्मणः प्लवगैः सह ॥ २८

सुग्रीवो ग्रीवया शेते भग्नया प्लवगाधिपः ।
निरस्तहनुकः शेते हनुमान् राक्षसैर्हतः ॥ २९

जाम्बवानथ जानुभ्यामुत्पतन्निहतो युधि ।
पट्टसैर्बहुभिश्छिन्नो निकृत्तः पादपो यथा ॥ ३०

मैन्दश्च द्विविदश्चोभौ निहतौ वानरर्षभौ ।
निश्वसन्तौ रुदन्तौ च रुधिरेण परिप्लुतौ ॥ ३१

असिना व्यायतौ छिन्नौ मध्ये वारिनिषूदनौ ।
अभितिष्ठति मेदिन्यां पनसः पनसो यथा ॥ ३२

नाराचैर्बहुभिश्छिन्नः शेते दर्यां दरीमुखः ।
कुमुदस्तु महातेजा निष्कूजः सायकैर्हतः ॥ ३३

अङ्गदो बहुभिश्छिन्नः शरैरासाद्य राक्षसैः ।
पतितो रुधिरोद्गारी क्षितौ निपतिताङ्गदः ॥ ३४

हरयो मथिता नागै रथजालैस्तथाऽपरे ।
शयाना मृदिताश्चाश्वैर्वायुवेगैरिवाम्बुदाः ॥ ३५

प्रसृताश्चापरे त्रस्ता हन्यमाना जघन्यतः ।
अभिद्रुतास्तु रक्षोभिः सिंहैरिव महाद्विपाः ॥ ३६

सागरे पतिताः केचित् केचिद्गगनमाश्रिताः ।
ऋक्षा वृक्षानुपारूढा वानरैस्तु विमिश्रिताः ॥ ३७

सागरस्य च तीरेषु शैलेषु च वनेषु च ।
पिङ्गलास्ते विरूपाक्षैर्बहुभिर्बहवो हताः ॥ ३८

एवं तव हतो भर्ता ससैन्यो मम सेनया ।
क्षतजार्द्रं रजोध्वस्तमिदं चास्याहृतं शिरः ॥ ३९

ततः परमदुर्धर्षो रावणो राक्षसाधिपः ।
सीतायामुपशृण्वन्त्यां राक्षसीमिदमब्रवीत् ॥ ४०

राक्षसं क्रूरकर्माणं विद्युज्जिह्वं त्वमानय ।
येन तद्राघवशिरः संग्रामात्स्वयमाहृतम् ॥ ४१

विद्युज्जिह्वस्ततो गृह्य शिरस्तत्सशरासनम् ।
प्रणामं शिरसा कृत्वा रावणस्याग्रतः स्थितः ॥ ४२

तमब्रवीत्ततो राजा रावणो राक्षसं स्थितम् ।
विद्युज्जिह्वं महाजिह्वं समीपपरिवर्तिनम् ॥ ४३

अग्रतः कुरु सीतायाः शीघ्रं दाशरथेः शिरः ।
अवस्थां पश्चिमां भर्तुः कृपणा साधु पश्यतु ॥ ४४

एवमुक्तं तु तद्रक्षः शिरस्तत्प्रियदर्शनम् ।
उपनिक्षिप्य सीतायाः क्षिप्रमन्तरधीयत ॥ ४५

रावणश्चापि चिक्षेप भास्वरं कार्मुकं महत् ।
त्रिषु लोकेषु विख्यातं सीतामिदमुवाच च ॥ ४६

इदं तत्तव रामस्य कार्मुकं ज्यासमायुतम् ।
इह प्रहस्तेनानीतं हत्वा तं निशि मानुषम् ॥ ४७

स विद्युजिह्वेन सहैव तच्छिरो
धनुश्च भूमौ विनिकीर्य रावणः ।
विदेहराजस्य सुतां यशस्विनीं
ततोऽब्रवीत्तां भव मे वशानुगा ॥ ४८

इति एकत्रिंशः सर्गः ॥



## द्वात्रिंशः सर्गः ॥

सा सीता तच्छिरो दृष्ट्वा तच्च कार्मुकमुत्तमम् ।
सुग्रीवप्रीतिसंसर्गमाख्यातं च हनूमता ॥ १

नयने मुखवर्णं च भर्तुस्तत्सदृशं मुखम् ।
केशान् केशान्तदेशं च तं च चूडामणिं शुभम् ॥ २

एतैः सर्वैरभिज्ञानैरभिज्ञाय सुदुःखिता ।
विजगर्हेऽत्र कैकेयीं क्रोशन्ती कुररी यथा ॥ ३

सकामा भव कैकेयी हतोऽयं कुलनन्दनः ।
कुलमुत्सादितं सर्वं त्वया कलहशीलया ॥ ४

आर्येण किं नु कैकेय्याः कृतं रामेण विप्रियम् ।
यद्गृहाच्चीरवसनस्त्वया प्रव्राजितो वनम् ॥ ५

इदानीं स हि धर्मात्मा राक्षसैश्च कथं हतः ॥
एवमुक्त्वा तु वैदेही वेपमाना तपस्विनी ।
जगाम जगतीं बाला छिन्ना तु कदली यथा ॥ ६

सा मुहूर्तात्समाश्वास्य प्रतिलभ्य च चेतनाम् ।
तच्छिरः समुपाघ्राय विललापायतेक्षणा ॥ ७

हा हताऽसि महाबाहो वीरव्रतमनुव्रत ।
इमां ते पश्चिमावस्थां गताऽस्मि विधवा कृता ॥ ८

प्रथमं मरणं नार्या भर्तुर्वैगुण्यमुच्यते ।
सुवृत्तः साधुवृत्तायाः संवृत्तस्त्वं ममाग्रतः ॥ ९

दुःखाद्दुःखं प्रपन्नाया मग्नायाः शोकसागरे ।
यो हि मामुद्यतस्त्रातुं सोऽपि त्वं विनिपातितः ॥ १०

सा श्वश्रूर्मम कौसल्या त्वया पुत्रेण राघव ।
वत्सेनेव यथा धेनुर्विवत्सा वत्सला कृता ॥ ११

आदिष्टं दीर्घमायुस्ते यैरचिन्त्यपराक्रम ।
अनृतं वचनं तेषामल्पायुरसि राघव ॥ १२

अथवा नश्यति प्रज्ञा प्राज्ञस्यापि सतस्तव ।
पचत्येनं यथा कालो भूतानां प्रभवो ह्ययम् ॥ १३

अदृष्टं मृत्युमापन्नः कस्मात्त्वं नयशास्त्रवित् ।
व्यसनानामुपायज्ञः कुशलो ह्यसि वर्जने ॥ १४

तथा त्वं संपरिष्वज्य रौद्रयाऽतिनृशंसया ।
कालरात्र्या मयाऽऽच्छिद्य हृतः कमललोचनः ॥ १५

अपि शेषे महाबाहो मां विहाय तपस्विनीम् ।
प्रियामिव शुभां नारीं पृथिवीं पुरुषर्षभ ॥ १६

अर्चितं सततं यत्नाद्गन्धमाल्यैर्मया तव ।
इदं ते मत्प्रियं वीर धनुः काञ्चनभूषणम् ॥ १७

पित्रा दशरथेन त्वं श्वशुरेण ममानघ ।
सर्वैश्च पितृभिः सार्धं नूनं स्वर्गे समागतः ॥ १८

दिवि नक्षत्रभूतस्त्वं महत्कर्म कृतं शुभम् ।
पुण्यं राजर्षिवंशं त्वमात्मनः समुपेक्षसे ॥ १९

किं मां न प्रेक्षसे राजन् किं मां न प्रतिभाषसे ।
बालां बाल्येन संप्राप्तां भार्यां मां सहचारिणीम् ॥ २०

संश्रुतं गृह्णता पाणिं चरिष्यामीति यत्त्वया ।
स्मर तन्मम काकुत्स्थ नय मामपि दुःखिताम् ॥ २१

कस्मान्मामपहाय त्वं गतो गतिमतां वर ।
अस्माल्लोकादमुं लोकं त्यक्त्वा मामपि दुःखिताम् ॥ २२

कल्याणैरुचितं यत्तत् परिष्वक्तं मयैव तु ।
क्रव्यादैस्तच्छरीरं ते नूनं विपरिकृष्यते ॥ २३

अग्निष्टोमादिभिर्यज्ञैरिष्टवानाप्तदक्षिणैः ।
अग्निहोत्रेण संस्कारं केन त्वं तु न लप्स्यसे ॥ २४

प्रव्रज्यामुपपन्नानां त्रयाणामेकमागतम् ।
परिद्रक्ष्यति कौसल्या लक्ष्मणं शोकलालसा ॥ २५

स तस्याः परिपृच्छन्त्या वधं मित्रबलस्य ते ।
तव चाख्यास्यते नूनं निशायां राक्षसैर्वधम् ॥ २६

सा त्वां सुप्तं हतं श्रुत्वा मां च रक्षोगृहं गताम् ।
हृदयेनावदीर्णेन न भविष्यति राघव ॥ २७

मम हेतोरनार्याया ह्यनघः पार्थिवात्मजः ।
रामः सागरमुत्तीर्य वीर्यवान् गोष्पदे हतः ॥ २८

अहं दाशरथेनोढा मोहात्स्वकुलपांसनी ।
आर्यपुत्रस्य रामस्य भार्या मृत्युरजायत ॥ २९

नूनमन्यां मया जातिं वारितं दानमुत्तमम् ।
याऽहमद्यैव शोचामि भार्या सर्वातिथेरपि ॥ ३०

साधु पातय मां क्षिप्रं रामस्योपरि रावण ।
समानय पतिं पत्न्या कुरु कल्याणमुत्तमम् ॥ ३१

शिरसा मे शिरश्चास्य कायं कायेन योजय ।
रावणानुगमिष्यामि गतिं भर्तुर्महात्मनः ।
मुहूर्तमपि नेच्छामि जीवितुं पापजीविता ॥ ३२

श्रुतं मया वेदविदां ब्राह्मणानां पितुर्गृहे ।
यासां स्त्रीणां प्रियो भर्ता तासां लोका महोदयाः ॥ ३३

क्षमा यस्मिन्दमस्त्यागः सत्यं धर्मः कृतज्ञता ।
अहिंसा चैव भूतानां तमृते का गतिर्मम ॥ ३४

इति सा दुःखसन्तप्ता विललापायतेक्षणा ।
भर्तुः शिरो धनुस्तत्र समीक्ष्य जनकात्मजा ॥ ३५

एवं लालप्यमानायां सीतायां तत्र राक्षसः ।
अभिचक्राम भर्तारमनीकस्थः कृताञ्जलिः ॥ ३६

विजयस्वार्यपुत्रेति सोऽभिवाद्य प्रसाद्य च ।
न्यवेदयदनुप्राप्तं प्रहस्तं वाहिनीपतिम् ॥ ३७

अमात्यैः सहितः सर्वैः प्रहस्तः समुपस्थितः ।
तेन दर्शनकामेन वयं प्रस्थापिताः प्रभो ॥ ३८

नूनमस्ति महाराज राजभावात्क्षमान्वितम् ।
किञ्चिदात्ययिकं कार्यं तेषां त्वं दर्शनं कुरु ॥ ३९

एतच्छ्रुत्वा दशग्रीवो राक्षसप्रतिवेदितम् ।
अशोकवनिकां त्यक्त्वा मन्त्रिणां दर्शनं ययौ ॥ ४०

स तु सर्वं समर्थ्यैव मन्त्रिभिः कृत्यमात्मनः ।
सभां प्रविश्य विदधे विदित्वा रामविक्रमम् ॥ ४१

अन्तर्धानं तु तच्छीर्षं तच्च कार्मुकमुत्तमम् ।
जगाम रावणस्यैव निर्याणसमनन्तरम् ॥ ४२

राक्षसेन्द्रस्तु तैः सार्धं मन्त्रिभिर्भीमविक्रमैः ।
समर्थयामास तदा रामकार्यविनिश्चयम् ॥ ४३

अविदूरस्थितान्सर्वान् बलाध्यक्षान् हितैषिणः ।
अब्रवीत्कालसदृशो रावणो राक्षसाधिपः ॥ ४४

शीघ्रं भेरीनिनादेन स्फुटकोणाहतेन मे ।
समानयध्वं सैन्यानि वक्तव्यं च न कारणम् ॥ ४५

ततस्तथेति प्रतिगृह्य तद्वचो
बलाधिपास्ते महदात्मनो बलम् ।
समानयंश्चैव समागमं च ते
न्यवेदयन् भर्तरि युद्धकाङ्क्षिणि ॥ ४६

इति द्वात्रिंशः सर्गः ॥



## त्रयस्त्रिंशः सर्गः ॥

सीतां तु मोहितां दृष्ट्वा सरमा नाम राक्षसी ।
आससादाशु वैदेहीं प्रियां प्रणयिनी सखी ॥ १

मोहितां राक्षसेन्द्रेण सीतां परमदुःखिताम् ।
आश्वासयामास तदा सरमा मृदुभाषिणी ॥ २

सा हि तत्र कृता मित्रं सीतया रक्ष्यमाणया ।
रक्षन्ती रावणादिष्टा सानुक्रोशा दृढव्रता ॥ ३

सा ददर्श सखीं सीतां सरमा नष्टचेतनाम् ।
उपावृत्योत्थितां ध्वस्तां वडवामिव पांसुषु ॥ ४

तां समाश्वासयामास सखीस्नेहेन सुव्रता ।
समाश्वसिहि वैदेहि माभूत्ते मनसो व्यथा ॥ ५

उक्ता यद्रावणेन त्वं प्रत्युक्तं च स्वयं त्वया ।
सखीस्नेहेन तद्भीरु मया सर्वं प्रतिश्रुतम् ॥ ६

लीनया गगने शून्ये भयमुत्सृज्य रावणात् ।
तव हेतोर्विशालाक्षि न हि मे जीवितं प्रियम् ॥ ७

स संभ्रान्तश्च निष्क्रान्तो यत्कृते राक्षसाधिपः ।
तच्च मे विदितं सर्वमभिनिष्क्रम्य मैथिलि ॥ ८

न शक्यं सौप्तिकं कर्तुं रामस्य विदितात्मनः ।
वधश्च पुरुषव्याघ्रे तस्मिन्नैवोपपद्यते ॥ ९

न त्वेव वानरा हन्तुं शक्याः पादपयोधिनः ।
सुरा देवर्षभेणेव रामेण हि सुरक्षिताः ॥ १०

दीर्घवृत्तभुजः श्रीमान् महोरस्कः प्रतापवान् ।
धन्वी संहननोपेतो धर्मात्मा भुवि विश्रुतः ॥ ११

विक्रान्तो रक्षिता नित्यमात्मनश्च परस्य च ।
लक्ष्मणेन सह भ्रात्रा कुशली नयशास्त्रवित् ॥ १२

हन्ता परबलौघानामचिन्त्यबलपौरुषः ।
न हतो राघवः श्रीमान् सीते शत्रुनिबर्हणः ॥ १३

अयुक्तबुद्धिकृत्येन सर्वभूतविरोधिना ।
रावणेन शठेन त्वां वशमानेतुमिच्छता ॥ १४

इयं प्रयुक्ता रौद्रेण माया मायाविदा त्वयि ।
शोकस्ते विगतः सर्वः कल्याणं त्वामुपस्थितम् ।
ध्रुवं त्वां भजते लक्ष्मीः प्रियं प्रीतिकरं शृणु ॥ १५

उत्तीर्य सागरं रामः सह वानरसेनया ।
सन्निविष्टः समुद्रस्य तीरमासाद्य दक्षिणम् ॥ १६

दृष्टो मे परिपूर्णार्थः काकुत्स्थः सहलक्ष्मणः ।
स हि तैः सागरान्तस्थैर्बलैस्तिष्ठति रक्षितः ॥ १७

अनेन प्रेषिता ये च राक्षसा लघुविक्रमाः ।
राघवस्तीर्ण इत्येव प्रवृत्तिस्तैरिहाहृता ॥ १८

स तां श्रुत्वा विशालाक्षि प्रवृत्तिं राक्षसाधिपः ।
एष मन्त्रयते सर्वैः सचिवैः सह रावणः ॥ १९

इति ब्रुवाणा सरमा राक्षसी सीतया सह ।
सर्वोद्योगेन सैन्यानां शब्दं शुश्राव भैरवम् ॥ २०

दण्डनिर्घातवादिन्याः श्रुत्वा भेर्या महास्वनम् ।
उवाच सरमा सीतामिदं मधुरभाषिणी ॥ २१

सन्नाहजननी ह्येषा भैरवा भीरु भेरिका ।
भेरीनादं च गम्भीरं शृणु तोयदनिःस्वनम् ॥ २२

कल्प्यन्ते मत्तमातङ्गा युज्यन्ते रथवाजिनः ।
हृष्यन्ते तुरगारूढाः प्रासहस्ताः सहस्रशः ॥ २३

तत्र तत्र च सन्नद्धाः संपतन्ति पदातयः ।
आपूर्यन्ते राजमार्गाः सैन्यैरद्भुतदर्शनैः ॥ २४

वेगवद्भिर्नदद्भिश्च तोयौघैरिव सागरः ।
शस्त्राणां च प्रसन्नानां चर्मणां वर्मणां तथा ॥ २५

रथवाजिगजानां च भूषितानां च रक्षसाम् ।
प्रभां विसृजतां पश्य नानावर्णसमुत्थिताम् ॥ २६

वनं निर्दहतो धर्मे प्रभामिव विभावसोः ।
घण्टानां शृणु निर्घोषं रथानां शृणु निःस्वनम् ॥ २७

हयानां हेषमाणानां शृणु तूर्यध्वनिं यथा ।
उद्यतायुधहस्तानां राक्षसेन्द्रानुयायिनाम् ॥ २८

संभ्रमो रक्षसामेष तुमुलो रोमहर्षणः ।
श्रीस्त्वां भजति शोकघ्नी रक्षसां भयमागतम् ॥ २९

रामः कमलपत्राक्षो दैत्यानामिव वासवः ।
विनिर्जित्य जितक्रोधस्त्वामचिन्त्यपराक्रमः ॥ ३०

रावणं समरे हत्वा ह्यचिरादेव मैथिलि ।
त्वया समग्रं प्रियया भर्ता त्वाऽधिगमिष्यति ॥ ३१

विक्रमिष्यति रक्षःसु भर्ता ते सहलक्ष्मणः ।
यथा शत्रुषु शत्रुघ्नो विष्णुना सह वासवः ॥ ३२

आगतस्य हि रामस्य क्षिप्रमङ्कगतां सतीम् ।
अहं द्रक्ष्यामि सिद्धार्थां त्वां शत्रौ विनिपातिते ॥ ३३

अश्रूण्यानन्दजानि त्वं वर्तयिष्यसि शोभने ।
समागम्य परिष्वक्ता तस्योरसि महोरसः ॥ ३४

अचिरान्मोक्ष्यते सीते देवि ते जघनं गताम् ।
धृतामेतान्बहून्मासान् वेणीं रामो महाबलः ॥ ३५

तस्य दृष्ट्वा मुखं देवि पूर्णचन्द्रमिवोदितम् ।
मोक्ष्यसे शोकजं वारि निर्मोकमिव पन्नगी ॥ ३६

रावणं समरे हत्वा नचिरादेव मैथिलि ।
त्वया समग्रः प्रियया सुखार्हो लप्स्यते सुखम् ॥ ३७

समागता त्वं रामेण मोदिष्यसि महात्मना ।
सुवर्षेण समायुक्ता यथा सस्येन मेदिनी ॥ ३८

गिरिवरमभितोऽनुवर्तमानो
हय इव मण्डलमाशु यः करोति ।
तमिह शरणमभ्युपैहि देवं
दिवसकरं प्रभवो ह्ययं प्रजानाम् ॥ ३९

इति त्रयस्त्रिंशः सर्गः ॥



## चतुस्त्रिंशः सर्गः ॥

अथ तां जातसन्तापां तेन वाक्येन मोहिताम् ।
सरमा ह्लादयामास पृथिवीं द्यौरिवाम्भसा ॥ १

ततस्तस्या हितं सख्याश्चिकीर्षन्ती सखीवचः ।
उवाच काले कालज्ञा स्मितपूर्वाभिभाषिणी ॥ २

उत्सहेयमहं गत्वा त्वद्वाक्यमसितेक्षणे ।
निवेद्य कुशलं रामे प्रतिच्छन्ना निवर्तितुम् ॥ ३

न हि मे क्रममाणाया निरालम्बे विहायसि ।
समर्थो गतिमन्वेतुं पवनो गरुडोऽपि वा ॥ ४

एवं ब्रुवाणां तां सीता सरमां पुनरब्रवीत् ।
मधुरं श्लक्ष्णया वाचा पूर्वशोकाभिपन्नया ॥ ५

समर्था गगनं गन्तुमपि वा त्वं रसातलम् ।
अवगच्छाम्यकर्तव्यं कर्तव्यं ते मदन्तरे ॥ ६

मत्प्रियं यदि कर्तव्यं यदि बुद्धिः स्थिरा तव ।
ज्ञातुमिच्छामि तं गत्वा किं करोतीति रावणः ॥ ७

स हि मायाबलः क्रूरो रावणः शत्रुरावणः ।
मां मोहयति दुष्टात्मा पीतमात्रेव वारुणी ॥ ८

तर्जापयति मां नित्यं भर्त्सापयति चासकृत् ।
राक्षसीभिः सुघोराभिर्या मां रक्षन्ति नित्यशः ॥ ९

उद्विग्ना शङ्किता चास्मि न स्वस्थं च मनो मम ।
तद्भयाच्चाहमुद्विग्ना अशोकवनिकां गता ॥ १०

यदि नाम कथा तस्य निश्चितं वाऽपि यद्भवेत् ।
निवेदयेथाः सर्वं तत्परो मे स्यादनुग्रहः ॥ ११

सा त्वेवं ब्रुवतीं सीतां सरमा वल्गुभाषिणी ।
उवाच वदनं तस्याः स्पृशन्ती बाष्पविक्लवम् ॥ १२

एष ते यद्यभिप्रायस्तस्माद्गच्छामि जानकि ।
गृह्य शत्रोरभिप्रायमुपावृत्तां च पश्य माम् ॥ १३

एवमुक्त्वा ततो गत्वा समीपं तस्य रक्षसः ।
शुश्राव कथितं तस्य रावणस्य समन्त्रिणः ॥ १४

सा श्रुत्वा निश्चयं तस्य निश्चयज्ञा दुरात्मनः ।
पुनरेवागमत्क्षिप्रमशोकवनिकां तदा ॥ १५

सा प्रविष्टा पुनस्तत्र ददर्श जनकात्मजाम् ।
प्रतीक्षमाणां स्वामेव भ्रष्टपद्मामिव श्रियम् ॥ १६

तां तु सीता पुनः प्राप्तां सरमां वल्गुभाषिणीम् ।
परिष्वज्य च सुस्निग्धं ददौ च स्वयमासनम् ॥ १७

इहासीना सुखं सर्वमाख्याहि मम तत्त्वतः ।
क्रूरस्य निश्चयं तस्य रावणस्य दुरात्मनः ॥ १८

एवमुक्ता तु सरमा सीतया वेपमानया ।
कथितं सर्वमाचष्टे रावणस्य समन्त्रिणः ॥ १९

न मोक्ष्यसि त्वां सुश्रोणि विना युद्धेन रावणः ।
जनन्या राक्षसेन्द्रो वै त्वन्मोक्षार्थं बृहद्वचः ।
अविद्धेन च वैदेहि मन्त्रिवृद्धेन बोधितः ॥ २०

दीयतामभिसत्कृत्य मनुजेन्द्राय मैथिली ।
निदर्शनं ते पर्याप्तं जनस्थाने यदद्भुतम् ॥ २१

लङ्घनं च समुद्रस्य दर्शनं च हनूमतः ।
वधं च रक्षसां युद्धे कः कुर्यान्मानुषो भुवि ॥ २२

एवं स मन्त्रिवृद्धेन मात्रा च बहु भाषितः ।
न त्वामुत्सहते मोक्तुमर्थमर्थपरो यथा ॥ २३

नोत्सहत्यमृतो मोक्तुं युद्धे त्वामिति मैथिलि ।
सामात्यस्य नृशंसस्य निश्चयो ह्येष वर्तते ॥ २४

तदेषा निश्चिता बुद्धिर्मृत्युलोभादुपस्थिता ।
भयान्न शक्तस्त्वां मोक्तुमनिरस्तस्तु संयुगे ॥ २५

राक्षसानां च सर्वेषामात्मनश्च वधेन हि ॥ २६

निहत्य रावणं संख्ये सर्वथा निशितैः शरैः ।
प्रतिनेष्यति रामस्त्वामयोध्यामसितेक्षणे ॥ २७

एतस्मिन्नन्तरे शब्दो भेरीशङ्खसमाकुलः ।
श्रुतो वानरसैन्यानां कम्पयन्धरणीतलम् ॥ २८

श्रुत्वा तु तद्वानरसैन्यशब्दं
लङ्कागता राक्षसराजभृत्याः ।

भ्रष्टौजसो दैन्यपरीतचेष्टाः
श्रेयो न पश्यन्ति नृपस्य दोषात् ॥ २९

इति चतुस्त्रिंशः सर्गः ॥



## पञ्चत्रिंशः सर्गः ॥

तेन शङ्खविमिश्रेण भेरीशब्देन राघवः ।
उपयाति महाबाहू रामः परपुरञ्जयः ॥ १

तं निनादं निशम्याथ रावणो राक्षसेश्वरः ।
मुहूर्तं ध्यानमास्थाय सचिवानभ्युदैक्षत ॥ २

अथ तान्सचिवांस्तत्र सर्वानाभाष्य रावणः ।
सभां सन्नादयन्सर्वामित्युवाच महाबलः ।
जगत्सन्तापनः क्रूरो गर्हयन् राक्षसेश्वरः ॥ ३

तरणं सागरस्यापि विक्रमं बलसञ्चयम् ।
यदुक्तवन्तो रामस्य भवन्तस्तन्मया श्रुतम् ॥ ४

भवतश्चाप्यहं वेद्मि युद्धे सत्यपराक्रमान् ।
तूष्णीकानीक्षतोऽन्योन्यं विदित्वा रामविक्रमम् ॥ ५

ततस्तु सुमहाप्राज्ञो माल्यवान्नाम राक्षसः ।
रावणस्य वचः श्रुत्वा मातुः पैतामहोऽब्रवीत् ॥ ६

विद्यास्वभिविनीतो यो राजा राजन्नयानुगः ।
स शास्ति चिरमैश्वर्यमरींश्च कुरुते वशे ॥ ७

सन्दधानो हि कालेन विगृह्णंश्चारिभिः सह ।
स्वपक्षवर्धनं कुर्वन् महदैश्वर्यमश्नुते ॥ ८

सपर्वतवनां कृत्स्नां महीं प्राप्यापि भूमिपः ।
तेजोभिर्दर्शयन्नर्थं क्षिप्रमेवोपहीयते ॥ ९

हीयमानेन कर्तव्यो राज्ञा सन्धिः समेन च ।
न शत्रुमवमन्येत ज्यायान्कुर्वीत विग्रहम् ॥ १०

तन्मह्यं रोचते सन्धिः सह रामेण रावण ।
यदर्थमभियुक्ताः स्म सीता तस्मै प्रदीयताम् ॥ ११

यस्य देवर्षयः सर्वे गन्धर्वाश्च जयैषिणः ।
विरोधं मा गमस्तेन सन्धिस्ते तेन रोचताम् ॥ १२

कामाद्वा यदि वा लोभान्मोहाद्वा यत्पुरा कृतम् ।
कृत्रिमं त्रिषु लोकेषु क्रियतां सांप्रतं हितम् ॥ १३

असृजद्भगवान्पक्षौ द्वावेव हि पितामहः ।
सुराणामसुराणां च धर्माधर्मौ तदाश्रयौ ॥ १४

धर्मो हि श्रूयते पक्ष अमराणां महात्मनाम् ।
अधर्मो रक्षसां पक्षो ह्यसुराणां च रावण ॥ १५

धर्मो वै ग्रसतेऽधर्मं ततः कृतमभूद्युगम् ।
अधर्मो ग्रसते धर्मं ततस्तिष्यः प्रवर्तते ॥ १६

तत्त्वया चरता लोकान् धर्मो विनिहतो महान् ।
अधर्मः प्रगृहीतश्च तेनास्मद्बलिनः परे ॥ १७

स प्रमादाद्विवृद्धस्तेऽधर्मोऽभिग्रसते हि नः ।
विवर्धयति पक्षं च सुराणां सुरभावनः ॥ १८

विषयेषु प्रसक्तेन यत्किञ्चित्कारिणा त्वया ।
ऋषीणामग्निकल्पानामुद्वेगो जनितो महान् ।
तेषां प्रभावो दुर्धर्षः प्रदीप्त इव पावकः ॥ १९

तपसा भावितात्मानो धर्मस्यानुग्रहे रताः ।
मुख्यैर्यज्ञैर्यजन्त्येते नित्यं तैस्तैर्द्विजातयः ॥ २०

जुह्वत्यग्नींश्च विधिवद्वेदांश्चोच्चैरधीयते ।
अभिभूय च रक्षांसि ब्रह्मघोषानुदैरयन् ॥ २१

दिशो विप्रद्रुताः सर्वाः स्तनयित्नुरिवोष्णगे ।
ऋषीणामग्निकल्पानामग्निहोत्रसमुत्थितः ॥ २२

आदत्ते रक्षसां तेजो धूमो व्याप्य दिशो दश ।
तेषु तेषु च देशेषु पुण्येष्वेव दृढव्रतैः ॥ २३

चर्यमाणं तपस्तीव्रं सन्तापयति राक्षसान् ।
देवदानवयक्षेभ्यो गृहीतश्च वरस्त्वया ॥ २४

मानुषा वानरा ऋक्षा गोलाङ्गूला महाबलाः ।
बलवन्त इहागम्य गर्जन्ति दृढविक्रमाः ॥ २५

उत्पातान्विविधान्दृष्ट्वा घोरान्बहुविधांस्तथा ।
विनाशमनुपश्यामि सर्वेषां रक्षसामहम् ॥ २६

खराभिस्तनिता घोरा मेघाः प्रतिभयङ्कराः ।
शोणितेनाभिवर्षन्ति लङ्कामुष्णेन सर्वतः ॥ २७

रुदतां वाहनानां च प्रपतन्त्यास्रबिन्दवः ।
ध्वजा ध्वस्ता विवर्णाश्च न प्रभान्ति यथा पुरा ॥ २८

व्याला गोमायवो गृध्रा वाश्यन्ति च सुभैरवम् ।
प्रविश्य लङ्कामनिशं समवायांश्च कुर्वते ॥ २९

कालिकाः पाण्डुरैर्दन्तैः प्रहसन्त्यग्रतः स्थिताः ।
स्त्रियः स्वप्नेषु मुष्णन्ति गृहाणि प्रतिभाष्य च ॥ ३०

गृहाणां बलिकर्माणि श्वानः पर्युपभुञ्जते ।
खरा गोषु प्रजायन्ते मूषिका नकुलैः सह ॥ ३१

मार्जारा द्वीपिभिः सार्धं सूकराः शुनकैः सह ।
किन्नरा राक्षसैश्चापि समेयुर्मानुषैः सह ॥ ३२

पाण्डुरा रक्तपादाश्च विहङ्गाः कालचोदिताः ।
राक्षसानां विनाशाय कपोता विचरन्ति च ॥ ३३

बीचीकूचीति वाश्यन्त्यः शारिका वेश्मसु स्थिताः ।
पतन्ति ग्रथिताश्चापि निर्जिताः कलहैषिणः ॥ ३४

पक्षिणश्च मृगाः सर्वे प्रत्यादित्यं रुदन्ति वै ।
करालो विकटो मुण्डः पुरुषः कृष्णपिङ्गलः ॥ ३५

कालो गृहाणि सर्वेषां काले कालेऽन्ववेक्षते ।
एतान्यन्यानि दुष्टानि निमित्तान्युत्पतन्ति च ॥ ३६

विष्णुं मन्यामहे देवं मानुषं देहमास्थितम् ।
न हि मानुषमात्रोऽसौ राघवो दृढविक्रमः ॥ ३७

येन बद्धः समुद्रस्य स सेतुः परमाद्भुतः ।
कुरुष्व नरराजेन सन्धिं रामेण रावण ॥ ३८

सीतार्थं ते महाप्राज्ञ महद्भयमुपस्थितम् ।
ज्ञात्वा प्रधार्य कार्याणि क्रियतामायतिक्षमम् ॥ ३९

इदं वचस्तत्र निगद्य माल्यवान्
परीक्ष्य रक्षोधिपतेर्मनः पुनः ।
अनुत्तमेषूत्तमपौरुषो बली
बभूव तूष्णीं समवेक्ष्य रावणम् ॥ ४०

स तद्वचो माल्यवता प्रभाषितं
दशाननो न प्रतिशुश्रुवे तदा ।
भृशं जगर्हे च सुदुष्टमानसो
मुमूर्षुरत्युच्चवचांस्युदीरयन् ॥ ४१

इति पञ्चत्रिंशः सर्गः ॥



## षट्त्रिंशः सर्गः ॥

तत्तु माल्यवतो वाक्यं हितमुक्तं दशाननः ।
न मर्षयति दुष्टात्मा कालस्य वशमागतः ॥ १

स बद्ध्वा भ्रुकुटिं वक्त्रे क्रोधस्य वशमागतः ।
अमर्षात्परिवृत्ताक्षो माल्यवन्तमथाब्रवीत् ॥ २

हितबुद्ध्या यदहितं वचः परुषमुच्यते ।
परपक्षं प्रविश्यैव नैतच्छ्रोत्रसुखं मम ॥ ३

मानुषं कृपणं राममेकं शाखामृगाश्रयम् ।
समर्थं मन्यसे केन त्यक्तं पित्रा वनाश्रयम् ॥ ४

रक्षसामीश्वरं मां च देवतानां भयङ्करम् ।
हीनं मां मन्यसे केन अहीनं सर्वविक्रमैः ॥ ५

वीरद्वेषेण वा शङ्के पक्षपातेन वा रिपोः ।
त्वयाऽहं परुषाण्युक्तः परप्रोत्साहनेन वा ॥ ६

प्रभवन्तं पदस्थं हि परुषं कोऽभिधास्यति ।
पण्डितः शास्त्रतत्त्वज्ञो विना प्रोत्साहनाद्रिपोः ॥ ७

आनीय च वनात्सीतां पद्महीनामिव श्रियम् ।
किमर्थं प्रतिदास्यामि राघवस्य भयादहम् ॥ ८

वृतं वानरकोटीभिः ससुग्रीवं सलक्ष्मणम् ।
पश्य कैश्चिदहोभिस्त्वं राघवं निहतं मया ॥ ९

द्वन्द्वे यस्य न तिष्ठन्ति दैवतान्यपि संयुगे ।
स कस्माद्रावणो युद्धे भयमाहारयिष्यति ॥ १०

द्विधा भज्येयमप्येवं न नमेयं तु कस्यचित् ।
एष मे सहजो दोषः स्वभावो दुरतिक्रमः ॥ ११

यदि तावत्समुद्रे तु सेतुर्बद्धो यदृच्छया ।
रामेण विस्मयः कोऽत्र येन ते भयमागतम् ॥ १२

स तु तीर्त्वाऽर्णवं रामः सह वानरसेनया ।
प्रतिजानामि ते सत्यं न जीवन् प्रतियास्यति ॥ १३

एवं ब्रुवाणं संरब्धं रुष्टं विज्ञाय रावणम् ।
व्रीडितो माल्यवान् वाक्यं नोत्तरं प्रत्यपद्यत ॥ १४

चिन्तयन्मनसा तस्य दुष्कर्मपरिपाकजम् ।
पापं नाशयति ह्येनं स्वस्य राष्ट्रस्य राक्षसैः ॥ १५

जयाशिषा च राजानं वर्धयित्वा यथोचितम् ।
माल्यवानभ्यनुज्ञातो जगाम स्वं निवेशनम् ॥ १६

रावणस्तु सहामात्यो मन्त्रयित्वा विमृश्य च ।
लङ्कायामतुलां गुप्तिं कारयामास राक्षसैः ॥ १७

व्यादिदेश च पूर्वस्यां प्रहस्तं द्वारि राक्षसम् ।
दक्षिणस्यां महावीर्यौ महापार्श्वमहोदरौ ।
व्यादिदेश महाकायौ राक्षसैर्बहुभिर्वृतौ ॥ १८

पश्चिमायामथो द्वारि पुत्रमिन्द्रजितं तथा ।
व्यादिदेश महामायं राक्षसैर्बहुभिर्वृतम् ॥ १९

उत्तरस्यां पुरद्वारि व्यादिश्य शुकसारणौ ।
स्वयं चात्र भविष्यामि मन्त्रिणस्तानुवाच ह ॥ २०

राक्षसं तु विरूपाक्षं महावीर्यपराक्रमम् ।
मध्यमेऽस्थापयद्गुल्मे बहुभिः सह राक्षसैः ॥ २१

एवं विधानं लङ्कायां कृत्वा राक्षसपुङ्गवः ।
कृतकृत्यमिवात्मानं मन्यते कालचोदितः ॥ २२

विसर्जयामास ततः स मन्त्रिणो
विधानमाज्ञाप्य पुरस्य पुष्कलम् ।
जयाशिषा मन्त्रिगणेन पूजितो
विवेश चान्तःपुरमृद्धिमन्महत् ॥ २३

इति षट्त्रिंशः सर्गः ॥



## सप्तत्रिंशः सर्गः ॥

नरवानरराजौ तौ स च वायुसुतः कपिः ।
जाम्बवानृक्षराजश्च राक्षसश्च विभीषणः ॥ १

अङ्गदो वालिपुत्रश्च सौमित्रिः शरभः कपिः ।
सुषेणः सहदायादो मैन्दो द्विविद एव च ॥ २

गजो गवाक्षः कुमुदो नलोऽथ पनसस्तथा ।
अमित्रविषयं प्राप्ताः समवेताः समर्थयन् ॥ ३

इयं सा लक्ष्यते लङ्का पुरी रावणपालिता ।
सासुरोरगगन्धर्वैरमरैरपि दुर्जया ॥ ४

कार्यसिद्धिं पुरस्कृत्य मन्त्रयध्वं विनिर्णये ।
नित्यं सन्निहितो ह्यत्र रावणो राक्षसाधिपः ॥ ५

तथा तेषु ब्रुवाणेषु रावणावरजोऽब्रवीत् ।
वाक्यमग्राम्यपदवत् पुष्कलार्थं विभीषणः ॥ ६

अनलः शरभश्चैव संपातिः प्रघसस्तथा ।
गत्वा लङ्कां ममामात्याः पुरीं पुनरिहागताः ॥ ७

भूत्वा शकुनयः सर्वे प्रविष्टाश्च रिपोर्बलम् ।
विधानं विहितं यच्च तद्दृष्ट्वा समुपस्थिताः ॥ ८

संविधानं यदाहुस्ते रावणस्य दुरात्मनः ।
राम तद्ब्रुवतः सर्वं याथातथ्येन मे शृणु ॥ ९

पूर्वं प्रहस्तः सबलो द्वारमासाद्य तिष्ठति ।
दक्षिणं च महावीर्यौ महापार्श्वमहोदरौ ॥ १०

इन्द्रजित्पश्चिमद्वारं राक्षसैर्बहुभिर्वृतः ।
पट्टसासिधनुष्मद्भिः शूलमुद्गरपाणिभिः ॥ ११

नानाप्रहरणैः शूरैरावृतो रावणात्मजः ।
राक्षसानां सहस्रैस्तु बहुभिः शस्त्रपाणिभिः ॥ १२

युक्तः परमसंविग्नो राक्षसैर्बहुभिर्वृतः ।
उत्तरं नगरद्वारं रावणः स्वयमास्थितः ॥ १३

विरूपाक्षस्तु महता शूलखड्गधनुष्मता ।
बलेन राक्षसैः सार्धं मध्यमं गुल्ममास्थितः ॥ १४

एतानेवंविधान् गुल्माँल्लङ्कायां समुदीक्ष्य ते ।
मामकाः सचिवाः सर्वे पुनः शीघ्रमिहागताः ॥ १५

गजानां च सहस्रं च रथानामयुतं पुरे ।
हयानामयुते द्वे च साग्रकोटिश्च रक्षसाम् ॥ १६

विक्रान्ता बलवन्तश्च संयुगेष्वाततायिनः ।
इष्टा राक्षसराजस्य नित्यमेते निशाचराः ॥ १७

एकैकस्यात्र युद्धार्थे राक्षसस्य निशां पते ।
परिवारः सहस्राणां सहस्रमुपतिष्ठते ॥ १८

एतां प्रवृत्तिं लङ्कायां मन्त्रिप्रोक्तां विभीषणः ।
एवमुक्त्वा महाबाहू राक्षसांस्तानदर्शयत् ॥ १९

लङ्कायां सचिवैः सर्वं रामाय प्रत्यवेदयत् ।
रामं कमलपत्राक्षमिदमुत्तरमब्रवीत् ॥ २०

रावणावरजः श्रीमान् रामप्रियचिकीर्षया ।
कुबेरं तु यदा राम रावणः प्रत्यबुद्ध्यत ।
षष्टिः शतसहस्राणि तदा निर्यान्ति राक्षसाः ॥ २१

पराक्रमेण वीर्येण तेजसा सत्वगौरवात् ।
सदृशा येऽत्र दर्पेण रावणस्य दुरात्मनः ॥ २२

अत्र मन्युर्न कर्तव्यो रोषये त्वां न भीषये ।
समर्थो ह्यसि वीर्येण सुराणामपि निग्रहे ॥ २३

तद्भवांश्चतुरङ्गेण बलेन महता वृतः ।
व्यूह्येदं वानरानीकं निर्मथिष्यसि रावणम् ॥ २४

रावणावरजे वाक्यमेवं ब्रुवति राघवः ।
शत्रूणां प्रतिघातार्थमिदं वचनमब्रवीत् ॥ २५

पूर्वद्वारे तु लङ्काया नीलो वानरपुङ्गवः ।
प्रहस्तप्रतियोद्धा स्याद्वानरैर्बहुभिर्वृतः ॥ २६

अङ्गदो वालिपुत्रस्तु बलेन महता वृतः ।
दक्षिणे बाधतां द्वारे महापार्श्वमहोदरौ ॥ २७

हनुमान्पश्चिमद्वारं निपीड्य पवनात्मजः ।
प्रविशत्वप्रमेयात्मा बहुभिः कपिभिर्वृतः ॥ २८

दैत्यदानवसङ्घानामृषीणां च महात्मनाम् ।
विप्रकारप्रियः क्षुद्रो वरदानबलान्वितः ॥ २९

परिक्रामति यः सर्वाँल्लोकान् सन्तापयन् प्रजाः ।
तस्याहं राक्षसेन्द्रस्य स्वयमेव वधे धृतः ॥ ३०

उत्तरं नगरद्वारमहं सौमित्रिणा सह ।
निपीड्याभिप्रवेक्ष्यामि सबलो यत्र रावणः ॥ ३१

वानरेन्द्रश्च बलवान् ऋक्षराजश्च वीर्यवान् ।
राक्षसेन्द्रानुजश्चैव गुल्मो भवतु मध्यमः ॥ ३२

न चैव मानुषं रूपं कार्यं हरिभिराहवे ।
एषा भवतु संज्ञा नो युद्धेऽस्मिन् वानरे बले ॥ ३३

वानरा एव नश्चिह्नं स्वजनेऽस्मिन् भविष्यति ।
वयं तु मानुषेणैव सप्त योत्स्यामहे परान् ॥ ३४

अहमेष सह भ्रात्रा लक्ष्मणेन महौजसा ।
आत्मना पञ्चमश्चायं सखा मम विभीषणः ॥ ३५

स रामः कृत्यसिद्ध्यर्थमेवमुक्त्वा विभीषणम् ।
सुवेलारोहणे बुद्धिं चकार मतिमान्मतिम् ॥ ३६

रमणीयतरं दृष्ट्वा सुवेलस्य गिरेस्तटम् ॥ ३७

इति सप्तत्रिंशः सर्गः ॥



## अष्टत्रिंशः सर्गः ॥

स तु कृत्वा सुवेलस्य मतिमारोहणं प्रति ।
लक्ष्मणानुगतो रामः सुग्रीवमिदमब्रवीत् ॥ १

विभीषणं च धर्मज्ञमनुरक्तं निशाचरम् ।
मन्त्रज्ञं च विधिज्ञं च श्लक्ष्णया परया गिरा ॥ २

सुवेलं साधुशैलेन्द्रमिमं धातुशतैश्चितम् ।
अध्यारोहामहे सर्वे वत्स्यामोऽत्र निशामिमाम् ॥ ३

लङ्कां चालोकयिष्यामो निलयं तस्य रक्षसः ।
येन मे मरणान्ताय हृता भार्या दुरात्मना ॥ ४

येन धर्मो न विज्ञातो न वृत्तं न कुलं तथा ।
राक्षस्या नीचया बुद्ध्या येन तद्गर्हितं कृतम् ॥ ५

तस्मिन्मे वर्धते रोषः कीर्तिते राक्षसाधमे ।
यस्यापराधान्नीचस्य वधं द्रक्ष्यामि रक्षसाम् ॥ ६

एको हि कुरुते पापं कालपाशवशं गतः ।
नीचेनात्मापचारेण कुलं तेन विनश्यति ॥ ७

एवं स मन्त्रयन्नेव सक्रोधो रावणं प्रति ।
रामः सुवेलं वासाय चित्रसानुमुपारुहत् ॥ ८

पृष्ठतो लक्ष्मणश्चैनमन्वगच्छत्समाहितः ।
सशरं चापमुद्यम्य सुमहद्विक्रमे रतः ॥ ९

तमन्वरोहत्सुग्रीवः सामात्यः सविभीषणः ।
हनुमानङ्गदो नीलो मैन्दो द्विविद एव च ॥ १०

गजो गवाक्षो गवयः शरभो गन्धमादनः ।
पनसः कुमुदश्चैव हरो रम्भश्च यूथपः ॥ ११

जाम्बवांश्च सुषेणश्च ऋषभश्च महामतिः ।
दुर्मुखश्च महातेजास्तथा शतबलिः कपिः ॥ १२

एते चान्ये च बहवो वानराः शीघ्रगामिनः ।
ते वायुवेगप्रवणास्तं गिरिं गिरिचारिणः ॥ १३

अध्यारोहन्त शतशः सुवेलं यत्र राघवः ।
ततः सुवेलमारुह्य रामस्तैः सह वानरैः ।
विषसाद गिरेस्तस्य शृङ्गे समतले शुभे ॥ १४

ततः कपिगणाः सर्वे समावृत्य द्वियोजनम् ।
सुवेलमध्यमारोहन् प्लवन्तो दक्षिणामुखाः ॥ १५

ते त्वदीर्घेण कालेन गिरिमारुह्य सर्वतः ।
ददृशुः शिखरे तस्य विषक्तामिव खे पुरीम् ॥ १६

तां शुभां प्रवरद्वारां प्राकारपरिशोभिताम् ।
लङ्कां राक्षससम्पूर्णां ददृशुर्हरियूथपाः ॥ १७

प्राकारचयसंस्थैश्च तथा नीलैर्निशाचरैः ।
ददृशुस्ते हरिश्रेष्ठाः प्राकारमपरं कृतम् ॥ १८

ते दृष्ट्वा वानराः सर्वे राक्षसान् युद्धकाङ्क्षिणः ।
मुमुचुर्विविधान्नादांस्तत्र रामस्य पश्यतः ॥ १९

ततोऽस्तमगमत्सूर्यः सन्ध्यया प्रतिरञ्जितः ।
पूर्णचन्द्रप्रदीप्ता च क्षपा समभिवर्तते ॥ २०

सुवेलपृष्ठं प्राप्ता सा महतीराघवानुगा ।
शुशुभे वानरी सेना प्रदोषसमये स्थिता ॥ २१

ततः स रामो हरिवाहिनीपति-
र्विभीषणेन प्रतिनन्द्य सत्कृतः ।
सलक्ष्मणो यूथपयूथसंवृतः
सुवेलपृष्ठे न्यवसद्यथासुखम् ॥ २२

इति अष्टत्रिंशः सर्गः ॥



## एकोनचत्वारिंशः सर्गः ॥



तां रात्रिमुषितास्तत्र सुवेले हरिपुङ्गवाः ।
लङ्कायां ददृशुर्वीरा वनान्युपवनानि च ॥ १

समसौम्यानि रम्याणि विशालान्यायतानि च ।
दृष्टिरम्याणि ते दृष्ट्वा बभूवुर्जातविस्मयाः ॥ २

चम्पकाशोकपुन्नागसालतालसमाकुला ।
तमालवनसंछन्ना नागमालासमावृता ॥ ३

हिन्तालैरर्जुनैर्नीपैः सप्तपर्णैश्च पुष्पितैः ।
तिलकैः कर्णिकारैश्च पाटलैश्च समन्ततः ॥ ४

शुशुभे पुष्पिताग्रैश्च लतापरिगतैर्द्रुमैः ।
लङ्का बहुविधैर्दिव्यैर्यथेन्द्रस्यामरावती ॥ ५

विचित्रकुसुमोपेतै रक्तकोमलपल्लवैः ।
शाद्वलैश्च तथा नीलैश्चित्राभिर्वनराजिभिः ॥ ६

गन्धाढ्यान्यभिरम्याणि पुष्पाणि च फलानि च ।
धारयन्त्यगमास्तत्र भूषणानीव मानवाः ॥ ७

तच्चैत्ररथसङ्काशं मनोज्ञं नन्दनोपमम् ।
वनं सर्वर्तुकं रम्यं शुशुभे षट्पदायुतम् ॥ ८

नत्यूहकोयष्टिमकैर्नृत्यमानैश्च बर्हिभिः ।
रुतं परभृतानां च शुश्रुवुर्वननिर्झरे ॥ ९

नित्यमत्तविहङ्गानि भ्रमराचरितानि च ।
कोकिलाकुलषण्डानि विहङ्गाभिरुतानि च ॥ १०

भृङ्गराजाभिगीतानि भ्रमरैः सेवितानि च ।
कोणालकविघुष्टानि सारसाभिरुतानि च ॥ ११

विविशुस्ते ततस्तानि वनान्युपवनानि च ।
हृष्टाः प्रमुदिता वीरा हरयः कामरूपिणः ॥ १२

तेषां प्रविशतां तत्र वानराणां महौजसाम् ।
पुष्पसंसर्गसुरभिर्ववौ घ्राणसुखोऽनिलः ॥ १३

अन्ये तु हरिवीराणां यूथान्निष्क्रम्य यूथपाः ।
सुग्रीवेणाभ्यनुज्ञाता लङ्कां जग्मुः पताकिनीम् ॥ १४

वित्रासयन्तो विहगांस्त्रासयन्तो मृगद्विपान् ।
कम्पयन्तश्च तां लङ्कां नादैस्स्वैर्नदतां वराः ॥ १५

कुर्वन्तस्ते महावेगा महीं चरणपीडिताम् ।
रजश्च सहसैवोर्ध्वं जगाम चरणोत्थितम् ॥ १६

ऋक्षाः सिंहा वराहाश्च महिषा वारणा मृगाः ।
तेन शब्देन वित्रस्ता जग्मुर्भीता दिशो दश ॥ १७

शिखरं तत्त्रिकूटस्य प्रांशु चैकं दिविस्पृशम् ।
समन्तात्पुष्पसंछन्नं महारजतसन्निभम् ॥ १८

शतयोजनविस्तीर्णं विमलं चारुदर्शनम् ।
श्लक्ष्णं श्रीमन्महच्चैव दुष्प्रापं शकुनैरपि ।
मनसाऽपि दुरारोहं किं पुनः कर्मणा जनैः ॥ १९

निविष्टा तत्र शिखरे लङ्का रावणपालिता ।
शतयोजनविस्तीर्णा त्रिंशद्योजनमायता ॥ २०

सा पुरी गोपुरैरुच्चैः पाण्डुराम्बुदसन्निभैः ।
काञ्चनेन च सालेन राजतेन च शोभिता ॥ २१

प्रासादैश्च विमानैश्च लङ्काऽत्यर्थं विराजते ।
घनैरिवातपापाये मध्यमं वैष्णवं पदम् ॥ २२

यस्यां स्तम्भसहस्रेण प्रासादः समलंकृतः ।
कैलासशिखराकारो दृश्यते खमिवोल्लिखन् ॥ २३

चैत्यः स राक्षसेन्द्रस्य बभूव पुरभूषणम् ।
शतेन रक्षसां नित्यं यः समग्रेण रक्ष्यते ॥ २४

मनोज्ञां काननवतीं पर्वतैरुपशोभिताम् ।
नानाधातुविचित्रैश्च उद्यानैरुपशोभिताम् ॥ २५

नानाविहगसंघुष्टां नानामृगनिषेविताम् ।
नानाकुसुमसंछन्नां नानाराक्षससेविताम् ॥ २६

तां समृद्धां समृद्धार्थो लक्ष्मीवाँल्लक्ष्मणाग्रजः ।
रावणस्य पुरीं रामो ददर्श सह वानरैः ॥ २७

तां महागृहसंबाधां दृष्ट्वा लक्ष्मणपूर्वजः ।
नगरीममरप्रख्यो विस्मयं प्राप वीर्यवान् ॥ २८

तां रत्नपूर्णां बहुसंविधानां
प्रासादमालाभिरलंकृतां च ।
पुरीं महायन्त्रकवाटमुख्यां
ददर्श रामो महता बलेन ॥ २९

इति एकोनचत्वारिंशः सर्गः ॥



## चत्वारिंशः सर्गः ॥

ततो रामः सुवेलाग्रं योजनद्वयमण्डलम् ।
आरुरोह ससुग्रीवो हरियूथपसंवृतः ॥ १

स्थित्वा मुहूर्तं तत्रैव दिशो दश विलोकयन् ।
त्रिकूटशिखरे रम्ये निर्मितां विश्वकर्मणा ॥ २

ददर्श लङ्कां सुन्यस्तां रम्यकाननशोभिताम् ।
तस्यां गोपुरशृङ्गस्थं राक्षसेन्द्रं दुरासदम् ॥ ३

श्वेतचामरपर्यन्तं विजयच्छत्रशोभितम् ।
रक्तचन्दनसंलिप्तं रत्नाभरणभूषितम् ॥ ४

नीलजीमूतसङ्काशं हेमसंछादिताम्बरम् ।
ऐरावतविषाणाग्रैरुत्कृष्टकिणवक्षसम् ॥ ५

शशलोहितरागेण संवीतं रक्तवाससा ।
सन्ध्यातपेन संवीतं मेघराशिमिवाम्बरे ॥ ६

पश्यतां वानरेन्द्राणां राघवस्यापि पश्यतः ।
दर्शनाद्राक्षसेन्द्रस्य सुग्रीवः सहसोत्थितः ॥ ७

क्रोधवेगेन सन्तप्तः सत्वेन च बलेन च ।
अचलाग्रादथोत्थाय पुप्लुवे गोपुरस्थले ॥ ८

स्थित्वा मुहूर्तं संप्रेक्ष्य निर्भयेनान्तरात्मना ।
तृणीकृत्य च तद्रक्षः सोऽब्रवीत्परुषं वचः ॥ ९

लोकनाथस्य रामस्य सखा दासोऽस्मि राक्षस ।
न मया मोक्ष्यसेऽद्य त्वं पार्थिवेन्द्रस्य तेजसा ॥ १०

इत्युक्त्वा सहसोत्पत्य पुप्लुवे तस्य चोपरि ।
आकृष्य मकुटं चित्रं पातयित्वाऽपतद्भुवि ॥ १

समीक्ष्य तूर्णमायान्तमाबभाषे निशाचरः ।
सुग्रीवस्त्वं परोक्षं मे हीनग्रीवो भविष्यसि ॥ १

इत्युक्त्वोत्थाय तं क्षिप्रं बाहुभ्यामाक्षिपत्तले ।
कन्तुवत्तं समुत्थाय बाहुभ्यामाक्षिपद्धरिः ॥ १

परस्परं स्वेदविदिग्धगात्रौ
परस्परं शोणितदिग्धदेहौ ।
परस्परं श्लिष्टनिरुद्धचेष्टौ
परस्परं शाल्मलिकिंशुको यथा ॥ १४

मुष्टिप्रहारैश्च तलप्रहारै-
ररत्निघातैश्च कराग्रघातैः ।
तौ चक्रतुर्युद्धमसह्यरूपं
महाबलौ वानरराक्षसेन्द्रौ ॥ १५

कृत्वा नियुद्धं भृशमुग्रवेगौ
कालं चिरं गोपुरवेदिमध्ये ।
उत्क्षिप्य चाक्षिप्य विनम्य देहौ
पादक्रमाद्गोपुरवेदिलग्नौ ॥ १६

अन्योन्यमाविध्य विलग्नदेहौ
तौ पेततुः सालनिखातमध्ये ।
उत्पेततुर्भूतलमस्पृशन्तौ
स्थित्वा मुहूर्तं त्वभिनिश्वसन्तौ ॥ १७

आलिङ्ग्य चालिङ्ग्य च बाहुयोक्त्रैः
संयोजयामासतुराहवे तौ ।
संरम्भशिक्षाबलसंप्रयुक्तौ
सञ्चेरतुः संप्रति युद्धमार्गैः ॥ १८

शार्दूलसिंहाविव जातदर्पौ
गजेन्द्रपोताविव संप्रयुक्तौ ।
संहत्य चापीड्य च तावुरोभ्यां
निपेततुर्वै युगपद्धरण्याम् ॥ १९

उद्यम्य चान्योन्यमधिक्षिपन्तौ
सञ्चक्रमाते बहुयुद्धमार्गैः ।
व्यायामशिक्षाबलसंप्रयुक्तौ
क्लमं न तौ जग्मतुराशु वीरौ ॥ २०

बाहूत्तमैर्वारणवारणाभै-
र्निवारयन्तौ वरवारणाभौ ।

चिरेण कालेन भृशं प्रयुक्तौ
सञ्चेरतुर्मण्डलमार्गमाशु ॥ २१

तौ परस्परमासाद्य यत्तावन्योन्यसूदने ।
मार्जाराविव भक्षार्थे वितस्थाते मुहुर्मुहुः ॥ २२

मण्डलानि विचित्राणि स्थानानि विविधानि च ।
गोमूत्रिकाणि चित्राणि गतप्रत्यागतानि च ॥ २३

तिरश्चीनगतान्येव तथा वक्रगतानि च ।
परिमोक्षं प्रहाराणां वर्जनं परिधावनम् ॥ २४

अभिद्रवणमाप्लावमास्थानं च सविग्रहम् ।
परावृत्तमपावृत्तमवद्रुतमवप्लुतम् ॥ २५

उपन्यस्तमपन्यस्तं युद्धमार्गविशारदौ ।
तौ सञ्चेरतुरन्योन्यं वानरेन्द्रश्च रावणः ॥ २६

एतस्मिन्नन्तरे रक्षो मायाबलमथात्मनः ।
आरब्धुमुपसम्पेदे ज्ञात्वा तं वानराधिपः ॥ २७

उत्पपात तदाऽऽकाशं जितकाशी जितक्लमः ।
रावणः स्थित एवात्र हरिराजेन वञ्चितः ॥ २८

अथ हरिवरनाथः प्राप्य संग्रामकीर्तिं
निशिचरपतिमाजौ योजयित्वा श्रमेण ।
गगनमतिविशालं लङ्घयित्वाऽर्कसूनु-
र्हरिगणबलमध्ये रामपार्श्वं जगाम ॥ २९

इति स सवितृसूनुस्तत्र तत्कर्म कृत्वा
पवनगतिरनीकं प्राविशत्संप्रहृष्टः ।
रघुवरनृपसूनोर्वर्धयन् युद्धहर्षं
तरुमृगगणमुख्यैः पूज्यमानो हरीन्द्रः ॥ ३०

इति चत्वारिंशः सर्गः ॥



## एकचत्वारिंशः सर्गः ॥

अथ तस्मिन्निमित्तानि दृष्ट्वा लक्ष्मणपूर्वजः ।
सुग्रीवं संपरिष्वज्य तदा वचनमब्रवीत् ॥ १

असंमन्त्र्य मया सार्धं तदिदं साहसं कृतम् ।
एवं साहसकर्माणि न कुर्वन्ति जनेश्वराः ॥ २

संशये स्थाप्य मां चेदं बलं च सविभीषणम् ।
कष्टं कृतमिदं वीर साहसं साहसप्रिय ॥ ३

इदानीं मा कृथा वीर एवंविधमचिन्तितम् ।
त्वयि किञ्चित्समापन्ने किं कार्यं सीतया मम ॥ ४

भरतेन महाबाहो लक्ष्मणेन यवीयसा ।
शत्रुघ्नेन च शत्रुघ्न स्वशरीरेण वा पुनः ॥ ५

त्वयि चानागते पूर्वमिति मे निश्चिता मतिः ।
जानतश्चापि ते वीर्यं महेन्द्रवरुणोपम ॥ ६

हत्वाऽहं रावणं युद्धे सपुत्रबलवाहनम् ।
अभिषिच्य च लङ्कायां विभीषणमथापि च ॥ ७

भरते राज्यमावेश्य त्यक्ष्ये देहं महाबल ।
तमेवंवादिनं रामं सुग्रीवः प्रत्यभाषत ॥ ८

तव भार्यापहर्तारं दृष्ट्वा राघव रावणम् ।
मर्षयामि कथं वीर जानन् पौरुषमात्मनः ॥ ९

इत्येवंवादिनं वीरमभिनन्द्य स राघवः ।
लक्ष्मणं लक्ष्मिसम्पन्नमिदं वचनमब्रवीत् ॥ १०

परिगृह्योदकं शीतं वनानि फलवन्ति च ।
बलौघं संविभज्येमं व्यूह्य तिष्ठाम लक्ष्मण ॥ ११

लोकक्षयकरं भीमं भयं पश्याम्युपस्थितम् ।
निबर्हणं प्रवीराणामृक्षवानररक्षसाम् ॥ १२

वाताश्च परुषा वान्ति कम्पते च वसुन्धरा ।
पर्वताग्राणि वेपन्ते नदन्ति धरणीधराः ॥ १३

मेघाः क्रव्यादसङ्काशाः परुषाः परुषस्वनाः ।
क्रूराः क्रूरं प्रवर्षन्ति मिश्रं शोणितबिन्दुभिः ॥ १४

रक्तचन्दनसङ्काशा सन्ध्या परमदारुणा ।
ज्वलच्च निपतत्येतदादित्यादग्निमण्डलम् ॥ १५

आदित्यमभिवाश्यन्ति जनयन्तो महद्भयम् ।
दीना दीनस्वरा घोरा अप्रशस्ता मृगद्विजाः ॥ १६

रजन्यामप्रकाशश्च सन्तापयति चन्द्रमाः ।
कृष्णरक्तांशुपर्यन्तो यथा लोकस्य संक्षये ॥ १७

ह्रस्वो रूक्षोऽप्रशस्तश्च परिवेषः सुलोहितः ।
आदित्यमण्डले नीलं लक्ष्म लक्ष्मण दृश्यते ॥ १८

दृश्यन्ते न यथावच्च नक्षत्राण्यभिवर्तते ।
युगान्तमिव लोकस्य पश्य लक्ष्मण शंसति ॥ १९

काकाः श्येनास्तथा गृध्रा नीचैः परिपतन्ति च ।
शिवाश्चाप्यशिवा वाचः प्रवदन्ति महास्वनाः ॥ २०

शैलैः शूलैश्च खड्गैश्च विसृष्टैः कपिराक्षसैः ।
भविष्यत्यावृता भूमिः मांसशोणितकर्दमा ॥ २१

क्षिप्रमद्य दुराधर्षां लङ्कां रावणपालिताम् ।
अभियाम जवेनैव सर्वतो हरिभिर्वृताः ॥ २२

इत्येवं तु वदन् वीरो लक्ष्मणं लक्ष्मणाग्रजः ।
तस्मादवातरच्छीघ्रं पर्वताग्रान्महाबलः ॥ २३

अवतीर्य च धर्मात्मा तस्माच्छैलात्स राघवः ।
परैः परमदुर्धर्षं ददर्श बलमात्मनः ॥ २४

संनह्य तु ससुग्रीवः कपिराजबलं महत् ।
कालज्ञो राघवः काले संयुगायाभ्यचोदयत् ॥ २५

ततः काले महाबाहुर्बलेन महता वृतः ।
प्रस्थितः पुरतो धन्वी लङ्कामभिमुखः पुरीम् ॥ २६

तं विभीषणसुग्रीवौ हनुमाञ्जाम्बवान्नलः ।
ऋक्षराजस्तथा नीलो लक्ष्मणश्चान्वयुस्तदा ॥ २७

ततः पश्चात्सुमहती पृतनर्क्षवनौकसाम् ।
प्रच्छाद्य महतीं भूमिमनुयाति स्म राघवम् ॥ २८

शैलशृङ्गाणि शतशः प्रवृद्धांश्च महीरुहान् ।
जगृहुः कुञ्जरप्रख्या वानराः परवारणाः ॥ २९

तौ तु दीर्घेण कालेन भ्रातरौ रामलक्ष्मणौ ।
रावणस्य पुरीं लङ्कामासेदतुररिन्दमौ ॥ ३०

पताकामालिनीं रम्यामुद्यानवनशोभिताम् ।
चित्रवप्रां सुदुष्प्रापामुच्चैःप्राकारतोरणाम् ॥ ३१

तां सुरैरपि दुर्धर्षां रामवाक्यप्रचोदिताः ।
यथानिवेशं संपीड्य न्यविशन्त वनौकसः ॥ ३२

लङ्कायास्तूत्तरद्वारं शैलशृङ्गमिवोन्नतम् ।
रामः सहानुजो धन्वी जुगोप च रुरोध च ॥ ३३

लङ्कामुपनिविष्टश्च रामो दशरथात्मजः ।
लक्ष्मणानुचरो वीरः पुरीं रावणपालिताम् ॥ ३४

उत्तरद्वारमासाद्य यत्र तिष्ठति रावणः ।
नान्यो रामाद्धि तद्द्वारं समर्थः परिरक्षितुम् ॥ ३५

रावणाधिष्ठितं भीमं वरुणेनेव सागरम् ।
सायुधै राक्षसैर्भीमैरभिगुप्तं समन्ततः ।
लघूनां त्रासजननं पातालमिव दानवैः ॥ ३६

विन्यस्तानि च योधानां बहूनि विविधानि च ।
ददर्शायुधजालानि तथैव कवचानि च ॥ ३७

पूर्वं तु द्वारमासाद्य नीलो हरिचमूपतिः ।
अतिष्ठत्सह मैन्देन द्विविदेन च वीर्यवान् ॥ ३८

अङ्गदो दक्षिणद्वारं जग्राह सुमहाबलः ।
ऋषभेण गवाक्षेण गजेन गवयेन च ॥ ३९

हनुमान् पश्चिमद्वारं ररक्ष बलवान् कपिः ।
प्लक्षश्चैव प्रभातश्च तावस्य सचिवावुभौ ।
प्रमाथिप्रघसाभ्यां च वीरैरन्यैश्च सङ्गतः ॥ ४०

मध्यमे च स्वयं गुल्मे सुग्रीवः समतिष्ठत ।
सह सर्वैर्हरिश्रेष्ठैः सुपर्णश्वसनोपमैः ॥ ४१

वानराणां तु षट्त्रिंशत् कोट्यः प्रख्यातयूथपाः ।
निपीड्योपनिविष्टाश्च सुग्रीवो यत्र वानरः ॥ ४२

शासनेन तु रामस्य लक्ष्मणः सविभीषणः ।
द्वारे द्वारे हरीणां तु कोटिं कोटिं न्यवेशयत् ॥ ४३

पश्चिमेन तु रामस्य सुग्रीवः सहजाम्बवान् ।
अदूरान्मध्यमे गुल्मे तस्थौ बहुबलानुगः ॥ ४४

ते तु वानरशार्दूलाः शार्दूला इव दंष्ट्रिणः ।
गृहीत्वा द्रुमशैलाग्रान् हृष्टा युद्धाय तस्थिरे ॥ ४५

सर्वे विकृतलाङ्गूलाः सर्वे दंष्ट्रानखायुधाः ।
सर्वे विकृतचित्राङ्गाः सर्वे च विकृताननाः ॥ ४६

दशनागबलाः केचित् केचिद्दशगुणोत्तराः ।
केचिन्नागसहस्रस्य बभूवुस्तुल्यविक्रमाः ॥ ४७

सन्ति चौघबलाः केचित् केचिच्छतगुणोत्तराः ।
अप्रमेयबलाश्चान्ये तत्रासन् हरियूथपाः ॥ ४८

अद्भुतश्च विचित्रश्च तेषामासीत्समागमः ।
तत्र वानरसैन्यानां शलभानामिवोद्यमः ॥ ४९

परिपूर्णमिवाकाशं संछन्नेव च मेदिनी ।
लङ्कामुपनिविष्टैश्च सम्पतद्भिश्च वानरैः ॥ ५०

शतं शतसहस्राणां पृथगृक्षवनौकसाम् ।
लङ्काद्वाराण्युपाजग्मुरन्ये योद्धुं समन्ततः ॥ ५१

आवृतः स गिरिः सर्वैस्तैः समन्तात् प्लवङ्गमैः ।
अयुतानां सहस्रं च पुरीं तामभ्यवर्तत ॥ ५२

वानरैर्बलवद्भिश्च बभूव द्रुमपाणिभिः ।
संवृता सर्वतो लङ्का दुष्प्रवेशाऽपि वायुना ॥ ५३

राक्षसा विस्मयं जग्मुः सहसाऽभिनिपीडिताः ।
वानरैर्मेघसङ्काशैः शक्रतुल्यपराक्रमैः ॥ ५४

महाशब्दोऽभवत्तत्र बलौघस्याभिवर्ततः ।
सागरस्येव भिन्नस्य यथा स्यात् सलिलस्वनः ॥ ५५

तेन शब्देन महता सप्राकारा सतोरणा ।
लङ्का प्रचलिता सर्वा सशैलवनकानना ॥ ५६

रामलक्ष्मणगुप्ता सा सुग्रीवेण च वाहिनी ।
बभूव दुर्धर्षतरा सर्वैरपि सुरासुरैः ॥ ५७

राघवः सन्निवेश्यैव सैन्यं स्वं रक्षसां वधे ।
संमन्त्र्य मन्त्रिभिः सार्धं निश्चित्य च पुनः पुनः ॥ ५८

आनन्तर्यमभिप्रेप्सुः क्रमयोगार्थतत्त्ववित् ।
विभीषणस्यानुमते राजधर्ममनुस्मरन् ।
अङ्गदं वालितनयं समाहूयेदमब्रवीत् ॥ ५९

गत्वा सौम्य दशग्रीवं ब्रूहि मद्वचनात् कपे ।
लङ्घयित्वा पुरीं लङ्कां भयं त्यक्त्वा गतव्यथः ॥ ६०

भ्रष्टश्रीक गतैश्वर्य मुमूर्षो नष्टचेतन ।
ऋषीणां देवतानां च गन्धर्वाप्सरसां तथा ॥ ६१

नागानामथ यक्षाणां राज्ञां च रजनीचर ।
यच्च पापं कृतं मोहादवलिप्तेन राक्षस ।
तस्य पापस्य संप्राप्ता व्युष्टिरद्य दुरावरा ॥ ६२

नूनमद्य गतो दर्पः स्वयंभूवरदानजः ।
यस्य दण्डधरस्तेऽहं दाराहरणकर्शितः ।
दण्डं धारयमाणस्तु लङ्काद्वारे व्यवस्थितः ॥ ६३

पदवीं देवतानां च महर्षीणां च राक्षस ।
राजर्षीणां च सर्वेषां गमिष्यसि युधि स्थितः ॥ ६४

बलेन येन वै सीतां मायया राक्षसाधम ।
मामतिक्रामयित्वा त्वं हृतवांस्तद्विदर्शय ॥ ६५

अराक्षसमिमं लोकं कर्तास्मि निशितैः शरैः ।
न चेच्छरणमभ्येषि मामुपादाय मैथिलीम् ॥ ६६

धर्मात्मा रक्षसां श्रेष्ठः संप्राप्तोऽयं विभीषणः ।
लङ्कैश्वर्यं ध्रुवं श्रीमानयं प्राप्नोत्यकण्टकम् ॥ ६७

न हि राज्यमधर्मेण भोक्तुं क्षणमपि त्वया ।
शक्यं मूर्खसहायेन पापेनाविदितात्मना ॥ ६८

युद्धयस्व वा धृतिं कृत्वा शौर्यमालम्ब्य राक्षस ।
मच्छरैस्त्वं रणे शान्तस्ततः पूतो भविष्यसि ॥ ६९

यद्वा विशसि लोकांस्त्रीन् पक्षिभूतो मनोजवः ।
मम चक्षुष्पथं प्राप्य न जीवन् प्रतियास्यसि ॥ ७०

ब्रवीमि त्वां हितं वाक्यं क्रियतामौर्ध्वदैहिकम् ।
सुदृष्टा क्रियतां लङ्का जीवितं ते मयि स्थितम् ॥ ७१

इत्युक्तः स तु तारेयो रामेणाक्लिष्टकर्मणा ।
जगामाकाशमाविश्य मूर्तिमानिव हव्यवाट् ॥ ७२

सोऽतिपत्य मुहूर्तेन श्रीमान् रावणमन्दिरम् ।
ददर्शासीनमव्यग्रं रावणं सचिवैः सह ॥ ७३

ततस्तस्याविदूरे स निपत्य हरिपुङ्गवः ।
दीप्ताग्निसदृशस्तस्थावङ्गदः कनकाङ्गदः ॥ ७४

तद्रामवचनं सर्वमन्यूनाधिकमुत्तमम् ।
सामात्यं श्रावयामास निवेद्यात्मानमात्मना ॥ ७५

दूतोऽहं कोसलेन्द्रस्य रामस्याक्लिष्टकर्मणः ।
वालिपुत्रोऽङ्गदो नाम यदि ते श्रोत्रमागतः ॥ ७६

आह त्वां राघवो रामः कौसल्यानन्दवर्धनः ।
निष्पत्य प्रतियुद्ध्यस्व नृशंस पुरुषो भव ॥ ७७

हन्तास्मि त्वां सहामात्यं सपुत्रज्ञातिबान्धवम् ।
निरुद्विग्नास्त्रयो लोका भविष्यन्ति हते त्वयि ॥ ७८

देवदानवयक्षाणां गन्धर्वोरगरक्षसाम् ।
शत्रुमद्योद्धरिष्यामि त्वामृषीणां च कण्टकम् ॥ ७९

विभीषणस्य चैश्वर्यं भविष्यति हते त्वयि ।
न चेत् सत्कृत्य वैदेहीं प्रणिपत्य प्रदास्यसि ॥ ८०

इत्येवं परुषं वाक्यं ब्रुवाणे हरिपुङ्गवे ।
अमर्षवशमापन्नो निशाचरगणेश्वरः ॥ ८१

ततः स रोषताम्राक्षः शशास सचिवांस्तदा ।
गृह्यतामेष दुर्मेधा वध्यतामिति चासकृत् ॥ ८२

रावणस्य वचः श्रुत्वा दीप्ताग्निसमतेजसः ।
जगृहुस्तं ततो घोराश्चत्वारो रजनीचराः ॥ ८३

ग्राहयामास तारेयः स्वयमात्मानमात्मवान् ।
बलं दर्शयितुं वीरो यातुधानगणे तदा ॥ ८४

स तान् बाहुद्वये सक्तानादाय पतगानिव ।
प्रासादं शैलसङ्काशमुत्पपाताङ्गदस्तदा ॥ ८५

तेऽन्तरिक्षाद्विनिर्धूतास्तस्य वेगेन राक्षसाः ।
भूमौ निपतिताः सर्वे राक्षसेन्द्रस्य पश्यतः ॥ ८६

ततः प्रासादशिखरं शैलशृङ्गमिवोन्नतम् ।
ददर्श राक्षसेन्द्रस्य वालिपुत्रः प्रतापवान् ॥ ८७

तत्पफाल पदाक्रान्तं दशग्रीवस्य पश्यतः ।
पुरा हिमवतः शृङ्गं वज्रिणेव विदारितम् ॥ ८८

भङ्क्त्वा प्रासादशिखरं नाम विश्राव्य चात्मनः ।
विनद्य सुमहानादमुत्पपात विहायसम् ॥ ८९

व्यथयन् राक्षसान्सर्वान् हर्षयंश्चापि वानरान् ।
स वानराणां मध्ये तु रामपार्श्वमुपागतः ॥ ९०

रावणस्तु परं चक्रे क्रोधं प्रासादधर्षणात् ।
विनाशं चात्मनः पश्यन्निश्वासपरमोऽभवत् ॥ ९१

रामस्तु बहुभिर्हृष्टैर्निनदद्भिः प्लवङ्गमैः ।
वृतो रिपुवधाकाङ्क्षी युद्धायैवाभ्यवर्तत ॥ ९२

सुषेणस्तु महावीर्यो गिरिकूटोपमो हरिः ।
बहुभिः संवृतस्तत्र वानरैः कामरूपिभिः ॥ ९३

चतुर्द्वाराणि सर्वाणि सुग्रीववचनात्कपिः ।
पर्यक्रामत दुर्धर्षो नक्षत्राणीव चन्द्रमाः ॥ ९४

तेषामक्षौहिणिशतं समवेक्ष्य वनौकसाम् ।
लङ्कामुपनिविष्टानां सागरं चाभिवर्तताम् ॥ ९५

राक्षसा विस्मयं जग्मुस्त्रासं जग्मुस्तथा परे ।
अपरे समरोद्धर्षाद्धर्षमेव प्रपेदिरे ॥ ९६

कृत्स्नं हि कपिभिर्व्याप्तं प्राकारपरिखान्तरम् ।
ददृशू राक्षसा दीनाः प्राकारं वानरीकृतम् ।
हाहाकारमकुर्वन्त राक्षसा भयमोहिताः ॥ ९७

तस्मिन्महाभीषणके प्रवृत्ते
कोलाहले राक्षसराजधान्याम् ।
प्रगृह्य रक्षांसि महायुधानि
युगान्तवाता इव संविचेरुः ॥ ९८

इति एकचत्वारिंशः सर्गः ॥



## द्विचत्वारिंशः सर्गः ॥

ततस्ते राक्षसास्तत्र गत्वा रावणमन्दिरम् ।
न्यवेदयन् पुरीं रुद्धां रामेण सह वानरैः ॥ १

रुद्धां तु नगरीं श्रुत्वा जातक्रोधो निशाचरः ।
विधानं द्विगुणं कृत्वा प्रासादं सोऽध्यरोहत ॥ २

स ददर्शावृतां लङ्कां सशैलवनकाननाम् ।
असंख्येयैर्हरिगणैः सर्वतो युद्धकाङ्क्षिभिः ॥ ३

स दृष्ट्वा वानरैः सर्वां वसुधां कवलीकृताम् ।
कथं क्षपयितव्याः स्युरिति चिन्तापरोऽभवत् ॥ ४

स चिन्तयित्वा सुचिरं धैर्यमालम्ब्य रावणः ।
राघवं हरियूथांश्च ददर्शायतलोचनः ॥ ५

राघवः सह सैन्येन मुदितो नाम पुप्लुवे ।
लङ्कां ददर्श गुप्तां वै सर्वतो राक्षसैर्वृताम् ॥ ६

दृष्ट्वा दाशरथिर्लङ्कां चित्रध्वजपताकिनीम् ।
जगाम मनसा सीतां दूयमानेन चेतसा ॥ ७

अत्र सा मृगशावाक्षी मत्कृते जनकात्मजा ।
पीड्यते शोकसन्तप्ता कृशा स्थण्डिलशायिनी ॥ ८

पीड्यमानां स धर्मात्मा वैदेहीमनुचिन्तयन् ।
क्षिप्रमाज्ञापयामास वानरान् द्विषतां वधे ॥ ९

एवमुक्ते तु वचने रामेणाक्लिष्टकर्मणा ।
संहर्षमाणाः प्लवगाः सिंहनादैरनादयन् ॥ १०

शिखरैर्विकिरामैनां लङ्कां मुष्टिभिरेव वा ।
इति स्म दधिरे सर्वे मनांसि हरियूथपाः ॥ ११

उद्यम्य गिरिश‍ृङ्गाणि शिखराणि महान्ति च ।
तरूंश्चोत्पाट्य विविधांस्तिष्ठन्ति हरियूथपाः ॥ १२

प्रेक्षतो राक्षसेन्द्रस्य तान्यनीकानि भागशः ।
राघवप्रियकामार्थं लङ्कामारुरुहुस्तदा ॥ १३

ते ताम्रवक्त्राः हेमाभाः रामार्थे त्यक्तजीविताः ।
लङ्कामेवाभ्यवर्तन्त सालतालशिलायुधाः ॥ १४

ते द्रुमैः पर्वताग्रैश्च मुष्टिभिश्च प्लवङ्गमाः ।
प्राकाराग्राण्यनेकानि ममन्थुस्तोरणानि च ॥ १५

परिखाः पूरयन्ति स्म प्रसन्नसलिलायुताः ।
पांसुभिः पर्वताग्रैश्च तृणैः काष्ठैश्च वानराः ॥ १६

ततः सहस्रयूथाश्च कोटियूथाश्च वानराः ।
कोटीशतयुताश्चान्ये लङ्कामारुरुहुस्तदा ॥ १७

काञ्चनानि प्रमृद्नन्तस्तोरणानि प्लवङ्गमाः ।
कैलासशिखराभाणि गोपुराणि प्रमथ्य च ॥ १८

आप्लवन्तः प्लवन्तश्च गर्जन्तश्च प्लवङ्गमाः ।
लङ्कां तामभिधावन्ति महावारणसन्निभाः ॥ १९

जयत्यतिबलो रामो लक्ष्मणश्च महाबलः ।
राजा जयति सुग्रीवो राघवेणाभिपालितः ॥ २०

इत्येवं घोषयन्तश्च गर्जन्तश्च प्लवङ्गमाः ।
अभ्यधावन्त लङ्कायाः प्राकारं कामरूपिणः ॥ २१

वीरबाहुः सुबाहुश्च नलश्च वनगोचरः ।
निपीड्योपनिविष्टास्ते प्राकारं हरियूथपाः ।
एतस्मिन्नन्तरे चक्रुः स्कन्धावारनिवेशनम् ॥ २२

पूर्वद्वारं तु कुमुदः कोटीभि दशभिर्वृतः ।
आवृत्य बलवांस्तस्थौ हरिभिर्जितकाशिभिः ॥ २३

साहाय्यार्थं तु तस्यैव निविष्टः प्रघसो हरिः ।
पनसश्च महाबाहुर्वानरैर्बहुभिर्वृतः ॥ २४

दक्षिणं द्वारमागम्य वीरः शतबलिः कपिः ।
आवृत्य बलवांस्तस्थौ विंशत्या कोटिभिर्वृतः ॥ २५

सुषेणः पश्चिमद्वारं गतस्तारापिता हरिः ।
आवृत्य बलवांस्तस्थौ षष्टिकोटिभिरावृतः ॥ २६

उत्तरं द्वारमासाद्य रामः सौमित्रिणा सह ।
आवृत्य बलवांस्तस्थौ सुग्रीवश्च हरीश्वरः ॥ २७

गोलाङ्गूलो महाकायो गवाक्षो भीमदर्शनः ।
वृतः कोट्या महावीर्यस्तस्थौ रामस्य पार्श्वतः ॥ २८

ऋक्षाणां भीमवेगानां धूम्रः शत्रुनिबर्हणः ।
वृतः कोट्या महावीर्यस्तस्थौ रामस्य पार्श्वतः ॥ २९

पश्चिमेन तु रामस्य सुग्रीवः सहजाम्बवान् ।
अदूरान्मध्यमे गुल्मे तस्थौ बहुबलान्वितः ॥ ३०

सन्नद्धस्तु महावीर्यो गदापाणिर्विभीषणः ।
वृतो यत्तैस्तु सचिवैस्तस्थौ तत्र महाबलः ॥ ३१

गजो गवाक्षो गवयः शरभो गन्धमादनः ।
समन्तात्परिधावन्तो ररक्षुर्हरिवाहिनीम् ॥ ३२

ततः कोपपरीतात्मा रावणो राक्षसेश्वरः ।
निर्याणं सर्वसैन्यानां द्रुतमाज्ञापयत्तदा ॥ ३३

एतच्छ्रुत्वा ततो वाक्यं रावणस्य मुखोद्गतम् ।
सहसा भीमनिर्घोषमुद्घुष्टं रजनीचरैः ॥ ३४

ततः प्रचोदिता भेर्यश्चन्द्रपाण्डुरपुष्कराः ।
हेमकोणाहता भीमा राक्षसानां समन्ततः ॥ ३५

विनेदुश्च महाघोषाः शङ्खाः शतसहस्रशः ।
राक्षसानां सुघोराणां मुखमारुतपूरिताः ॥ ३६

ते बभुः शुकनीलाङ्गाः सशङ्खा रजनीचराः ।
विद्युन्मण्डलसन्नद्धाः सबलाका इवाम्बुदाः ॥ ३७

निष्पतन्ति ततः सैन्या हृष्टा रावणचोदिताः ।
समये पूर्यमाणस्य वेगा इव महोदधेः ॥ ३८

ततो वानरसैन्येन मुक्तो नादः समन्ततः ।
मलयः पूरितो येन ससानुप्रस्थकन्दरः ॥ ३९

शङ्खदुन्दुभिसंघुष्टः सिंहनादस्तरस्विनाम् ।
पृथिवीं चान्तरिक्षं च सागरं चैव नादयन् ॥ ४०

गजानां बृंहितैः सार्धं हयानां हेषितैरपि ।
रथानां नेमिघोषैश्च रक्षसां पादनिस्वनैः ॥ ४१

एतस्मिन्नन्तरे घोरः संग्रामः समवर्तत ।
रक्षसां वानराणां च यथा देवासुरे पुरा ॥ ४२

ते गदाभिः प्रदीप्ताभिः शक्तिशूलपरश्वधैः ।
निजघ्नुर्वानरान् घोराः कथयन्तः स्वविक्रमान् ॥ ४३

वानराश्च महावीर्या राक्षसान् जघ्नुराहवे ।
जयत्यतिबलो रामो लक्ष्मणश्च महाबलः ॥ ४४

राजा जयति सुग्रीव इति शब्दो महानभूत् ।
राजन् जय जयेत्युक्त्वा स्वस्वनामकथान्ततः ॥ ४५

तथा वृक्षैर्महाकाया: पर्वताग्रैश्च वानरा: ।
निजघ्नुस्तानि रक्षांसि नखैर्दन्तैश्च वेगिता: ॥ ४६

राक्षसास्त्वपरे भीमा: प्राकारस्था महीगतान् ।
भिण्डिपालैश्च खड्गैश्च शूलैश्चैव व्यदारयन् ॥ ४७

वानराश्चापि संक्रुद्धा: प्राकारस्थान् महीगता: ।
राक्षसान् पातयामासु: समाप्लुत्य स्वबाहुभि: ॥ ४८

स संप्रहारस्तुमुलो मांसशोणितकर्दम: ।
रक्षसां वानराणां च संबभूवाद्भुतोपम: ॥ ४९

इति द्विचत्वारिंश: सर्ग: ॥



## त्रिचत्वारिंश: सर्ग: ॥



युद्ध्यतां तु ततस्तेषां वानराणां महात्मनाम् ।
रक्षसां संबभूवाथ बलकोप: सुदारुण: ॥ १

ते हयै: काञ्चनापीडैर्ध्वजैश्चाग्निशिखोपमै: ।
रथैश्चादित्यसङ्काशै: कवचैश्च मनोरमै: ॥ २

निर्ययू राक्षसव्याघ्रा नादयन्तो दिशो दश ।
राक्षसा भीमकर्माणो रावणस्य जयैषिणः ॥ ३

वानराणामपि चमूर्बृहती जयमिच्छताम् ।
अभ्यधावत तां सेनां रक्षसां कामरूपिणाम् ॥ ४

एतस्मिन्नन्तरे तेषामन्योन्यमभिधावताम् ।
रक्षसां वानराणां च द्वन्द्वयुद्धमवर्तत ॥ ५

अङ्गदेनेन्द्रजित्सार्धं वालिपुत्रेण राक्षसः ।
अयुध्यत महातेजास्त्र्यम्बकेण यथाऽन्तकः ॥ ६

प्रजङ्घेन च संपातिर्नित्यं दुर्मर्षणो रणे ।
जम्बुमालिनमारब्धो हनुमानपि वानरः ॥ ७

सङ्गतः सुमहाक्रोधो राक्षसो रावणानुजः ।
समरे तीक्ष्णवेगेन मित्रघ्नेन विभीषणः ॥ ८

तपनेन गजः सार्धं राक्षसेन महाबलः ।
निकुम्भेन महातेजा नीलोऽपि समयुध्यत ॥ ९

वानरेन्द्रस्तु सुग्रीवः प्रघसेन समागतः ।
सङ्गतः समरे श्रीमान् विरूपाक्षेण लक्ष्मणः ॥ १०

अग्निकेतुश्च दुर्धर्षो रश्मिकेतुश्च राक्षसः ।
मित्रघ्नो यज्ञकोपश्च रामेण सह सङ्गताः ॥ ११

वज्रमुष्टिस्तु मैन्देन द्विविदेनाशनिप्रभः ।
राक्षसाभ्यां सुघोराभ्यां कपिमुख्यौ समागतौ ॥ १२

वीरः प्रतपनो घोरो राक्षसो रणदुर्धरः ।
समरे तीक्ष्णवेगेन नलेन समयुध्यत ॥ १३

धर्मस्य पुत्रो बलवान् सुषेण इति विश्रुतः ।
स विद्युन्मालिना सार्धमयुध्यत महाकपिः ॥ १४

वानराश्चापरे भीमा राक्षसैरपरैः सह ।
द्वन्द्वं समीयुर्बहुधा युद्धाय बहुभिः सह ॥ १५

तत्रासीत्सुमहद्युद्धं तुमुलं रोमहर्षणम् ।
रक्षसां वानराणां च वीराणां जयमिच्छताम् ॥ १६

हरिराक्षसदेहेभ्यः प्रभूताः केशशाद्वलाः ।
शरीरसङ्घाटवहाः प्रसुस्रुः शोणितापगाः ॥ १७

आजघानेन्द्रजित्क्रुद्धो वज्रेणेव शतक्रतुः ।
अङ्गदं गदया वीरं शत्रुसैन्यविदारणम् ॥ १८

तस्य काञ्चनचित्राङ्गं रथं साश्वं ससारथिम् ।
जघान समरे श्रीमानङ्गदो वेगवान् कपिः ॥ १९

सम्पातिस्तु त्रिभिर्बाणैः प्रजङ्घेन समाहतः ।
निजघानाश्वकर्णेन प्रजङ्घं रणमूर्धनि ॥ २०

जम्बुमाली रथस्थस्तु रथशक्त्या महाबलः ।
बिभेद समरे क्रुद्धो हनूमन्तं स्तनान्तरे ॥ २१

तस्य तं रथमास्थाय हनूमान्मारुतात्मजः ।
प्रममाथ तलेनाशु सह तेनैव रक्षसा ॥ २२

मित्रघ्नमरिदर्पघ्नमापतन्तं विभीषणः ।
आसाद्य गदया गुर्व्या जघान रणमूर्धनि ॥ २३

नदन् प्रतपनो घोरो नलं सोऽप्यन्वधावत ।
नलः प्रतपनस्याशु पातयामास चक्षुषी ॥ २४

भिन्नगात्रः शरैस्तीक्ष्णैः क्षिप्रहस्तेन रक्षसा ।
प्रजघानाद्रिशृङ्गेण तपनं वेगवान् गजः ॥ २५

भिन्नगात्रः शरैस्तीक्ष्णैर्मित्रघ्नेन विभीषणः ।
मित्रघ्नं गदया क्रुद्धो निजघान महाहवे ॥ २६

ग्रसन्तमिव सैन्यानि प्रघसं वानराधिपः ।
सुग्रीवः सप्तपर्णेन निर्बिभेद जघान च ॥ २७

प्रपीड्य शरवर्षेण राक्षसं भीमदर्शनम् ।
निजघान विरूपाक्षं शरेणैकेन लक्ष्मणः ॥ २८

अग्निकेतुश्च दुर्धर्षो रश्मिकेतुश्च राक्षसः ।
सुप्तघ्नो यज्ञकोपश्च रामं निर्बिभिदुः शरैः ॥ २९

तेषां चतुर्णां रामस्तु शिरांसि निशितैः शरैः ।
क्रुद्धश्चतुर्भिश्चिच्छेद घोरैरग्निशिखोपमैः ॥ ३०

वज्रमुष्टिस्तु मैन्देन मुष्टिना निहतो रणे ।
पपात सरथः साश्वः पुराट्ट इव भूतले ॥ ३१

निकुम्भस्तु रणे नीलं नीलाञ्जनचयप्रभम् ।
निर्बिभेद शरैस्तीक्ष्णैः करैर्मेघमिवांशुमान् ॥ ३२

पुनः शरशतेनाथ क्षिप्रहस्तो निशाचरः ।
बिभेद समरे नीलं निकुम्भः प्रजहास च ॥ ३३

तस्यैव रथचक्रेण नीलो विष्णुरिवाहवे ।
शिरश्चिच्छेद समरे निकुम्भस्य च सारथेः ॥ ३४

वज्राशनिसमस्पर्शो द्विविदोऽप्यशनिप्रभम् ।
जघान गिरिशृङ्गेण मिषतां सर्वरक्षसाम् ॥ ३५

द्विविदं वानरेन्द्रं तु नगयोधिनमाहवे ।
शरैरशनिसङ्काशैः स विव्याधाशनिप्रभः ॥ ३६

स शरैरतिविद्धाङ्गो द्विविदः क्रोधमूर्च्छितः ।
सालेन सरथं साश्वं निजघानाशनिप्रभम् ॥ ३७

विद्युन्माली रथस्थस्तु शरैः काञ्चनभूषणैः ।
सुषेणं ताडयामास ननाद च मुहुर्मुहुः ॥ ३८

तं रथस्थमथो दृष्ट्वा सुषेणो वानरोत्तमः ।
गिरिशृङ्गेण महता रथमाशु न्यपातयत् ॥ ३९

लाघवेन तु संयुक्तो विद्युन्माली निशाचरः ।
अपक्रम्य रथात्तूर्णं गदापाणिः क्षितौ स्थितः ॥ ४०

ततः क्रोधसमाविष्टः सुषेणो हरिपुङ्गवः ।
शिलां सुमहतीं गृह्य निशाचरमभिद्रवत् ॥ ४१

तमापतन्तं गदया विद्युन्माली निशाचरः ।
वक्षस्यभिजघानाशु सुषेणं हरिपुङ्गवम् ॥ ४२

गदाप्रहारं तं घोरमचिन्त्य प्लवगोत्तमः ।
तां शिलां पातयामास तस्योरसि महामृधे ॥ ४३

शिलाप्रहाराभिहतो विद्युन्माली निशाचरः ।
निष्पिष्टहृदयो भूमौ गतासुर्निपपात ह ॥ ४४

एवं तैर्वानरैः शूरैः शूरास्ते रजनीचराः ।
द्वन्द्वे विमृदितास्तत्र दैत्या इव दिवौकसैः ॥ ४५

भग्नैः खड्गैर्गदाभिश्च शक्तितोमरपट्टसैः ।
अपविद्धैश्च भिन्नैश्च रथैः सांग्रामिकैर्हयैः ॥ ४६

निहतैः कुञ्जरैर्मत्तैस्तथा वानरराक्षसैः ।
चक्राक्षयुगदण्डैश्च भग्नैर्धरणिसंश्रितैः ।
बभूवायोधनं घोरं गोमायुगणसंकुलम ॥ ४७

कबन्धानि समुत्पेतुर्दिक्षु वानररक्षसाम् ।
विमर्दे तुमुले तस्मिन् देवासुररणोपमे ॥ ४८

विदार्यमाणा हरिपुङ्गवैस्तदा
निशाचराः शोणितदिग्धगात्राः ।
पुनः सुयुद्धं तरसा समास्थिताः
दिवाकरस्यास्तमयाभिकाङ्क्षिणः ॥ ४९

इति त्रिचत्वारिंशः सर्गः ॥



# चतुश्चत्वारिंशः सर्गः ॥

युद्ध्यतामेव तेषां तु तदा वानररक्षसाम् ।
रविरस्तं गतो रात्रिः प्रवृत्ता प्राणहारिणी ॥ १

अन्योन्यं बद्धवैराणां घोराणां जयमिच्छताम् ।
संप्रवृत्तं निशायुद्धं तदा वानररक्षसाम् ॥ २

राक्षसोऽसीति हरयो हरिश्चासीति राक्षसाः ।
अन्योन्यं समरे जघ्नुस्तस्मिंस्तमसि दारुणे ॥ ३

मा गाः सुयोध तिष्ठेति मल्लयुद्धं प्रयच्छ मे ।
अन्योन्यं शङ्किलार्था मां हित्वा कुत्र च गच्छसि ॥ ४

श्रमं हि वा मया गच्छ क्षणं युध्यस्व निर्वृतः ।
इत्यन्योन्यं राक्षसानां वानराणां महात्मनाम् ॥ ५

जहि दारय चैहीति कथं विद्रवसीति च ।
एवं सुतुमलः शब्दस्तस्मिन्सैन्ये विशुश्रुवे ॥ ६

कालाः काञ्चनसन्नाहास्तस्मिंस्तमसि राक्षसाः ।
सम्प्रादृश्यन्त शैलेन्द्रा दीप्तौषधिवना इव ॥ ७

तस्मिंस्तमसि दुष्पारे राक्षसाः क्रोधमूर्च्छिताः ।
परिपेतुर्महावेगा भक्षयन्तः प्लवङ्गमान् ॥ ८

ते हयान्काञ्चनापीडान् ध्वजांश्चाग्निशिखोपमान् ।
आप्लुत्य दशनैस्तीक्ष्णैर्भीमकोपा व्यदारयन् ॥ ९

वानरा बलिनो युद्धेऽक्षोभयन् राक्षसीं चमूम् ।
कुञ्जरान्कुञ्जरारोहान् पताकाध्वजिनो रथान् ।
चकर्षुश्च ददंशुश्च दशनैः क्रोधमूर्च्छिताः ॥ १०

लक्ष्मणश्चापि रामश्च शरैराशीविषोपमैः ।
दृश्यादृश्यानि रक्षांसि प्रवराणि निजघ्नतुः ॥ ११

तुरङ्गखुरविध्वस्तं रथनेमिसमुत्थितम् ।
रुरोध कर्णनेत्राणि युध्यतां धरणीरजः ॥ १२

वर्तमाने तदा घोरे संग्रामे रोमहर्षणे ।
रुधिरौघा महाघोरा नद्यस्तत्र प्रसुस्रुवुः ॥ १३

ततो भेरीमृदङ्गानां पणवानां च निस्वनः ।
शङ्खवेणुस्वनोन्मिश्रः संबभूवाद्भुतोपमः ।
विमर्दे तुमुले तस्मिन् देवासुररणोपमे ॥ १४

हतानां स्तनमानानां राक्षसानां च निस्वनः ।
शस्तानां वानराणां च समभूत्तत्र दारुणः ॥ १५

हतैर्वानरमुख्यैश्च शक्तिशूलपरश्वधैः ।
निहतैः पर्वताग्रैश्च राक्षसैः कामरूपिभिः ॥ १६

शस्त्रपुष्पोपहारा च तत्रासीद्युद्धमेदिनी ।
दुस्तरा दुर्निवेशा च शोणितास्रावकर्दमा ॥ १७

सा बभूव निशा घोरा हरिराक्षसहारिणी ।
कालरात्रीव भूतानां सर्वेषां दुरतिक्रमा ॥ १८

ततस्ते राक्षसास्तत्र तस्मिंस्तमसि दारुणे ।
राममेवाभ्यवर्तन्त संसृष्टाः शरवृष्टिभिः ॥ १९

तेषामापततां शब्दः क्रुद्धानामभिगर्जताम् ।
उद्धर्त इव सप्तानां समुद्राणामभूत्स्वनः ॥ २०

तेषां रामः शरैः षड्भिः षड् जघान निशाचरान् ।
निमेषान्तरमात्रेण शितैरग्निशिखोपमैः ॥ २१

यमशत्रुश्च दुर्धर्षो महापार्श्वमहोदरौ ।
वज्रदंष्ट्रो महाकायस्तौ चोभौ शुकसारणौ ॥ २२

ते तु रामेण बाणौघैः सर्वे मर्मसु ताडिताः ।
युद्धादपसृतास्तत्र सावशेषायुषोऽभवन् ॥ २

तत्र काञ्चनचित्राङ्गैः शरैरग्निशिखोपमैः ।
दिशश्चकार विमलाः प्रदिशश्च महाबलः ।
रामनामाङ्कितैर्बाणैर्व्याप्तं तद्रणमण्डलम् ॥ २

ये त्वन्ये राक्षसा भीमा रामस्याभिमुखे स्थिताः ।
तेऽपि नष्टाः समासाद्य पतङ्गा इव पावकम् ॥ २

सुवर्णपुङ्खैर्विशिखैः सम्पतद्भिः सहस्रशः ।
बभूव रजनी चित्रा खद्योतैरिव शारदी ॥ २

राक्षसानां च निनदैर्हरीणां चापि निस्वनैः ।
सा बभूव निशा घोरा भूयो घोरतरा तदा ॥ २

तेन शब्देन महता प्रवृद्धेन समन्ततः ।
त्रिकूटः कन्दराकीर्णः प्रव्याहरदिवाचलः ॥ २

गोलाङ्गूला महाकायास्तमसा तुल्यवर्चसः ।
संपरिष्वज्य बाहुभ्यां भक्षयन् रजनीचरान् ॥ २

अङ्गदस्तु रणे शत्रुं निहन्तुं समुपस्थितः ।
रावणिं निजघानाशु सारथिं च हयानपि ॥ ३

वर्तमाने तदा घोरे संग्रामे भृशदारुणे ।
इन्द्रजित्तु रथं त्यक्त्वा हताश्वो हतसारथिः ।
अङ्गदेन महामायस्तत्रैवान्तरधीयत ॥ ३१

तत्कर्म वालिपुत्रस्य सर्वे देवाः महर्षिभिः ।
तुष्टुवुः पूजनार्हस्य तौ चोभौ रामलक्ष्मणौ ॥ ३२

प्रभावं सर्वभूतानि विदुरिन्द्रजितो युधि ।
अदृश्यः सर्वभूतानां योऽभवद् युधि दुर्जयः ॥ ३३

तेन ते तं महात्मानं तुष्टा दृष्ट्वा प्रधर्षितम् ।
ततः प्रहृष्टाः कपयः ससुग्रीवविभीषणाः ॥ ३४

साधु साध्विति नेदुश्च दृष्ट्वा शत्रुं प्रधर्षितम् ।
इन्द्रजित्तु तदा तेन निर्जितो भीमकर्मणा ॥ ३५

संयुगे बालिपुत्रेण क्रोधं चक्रे सुदारुणम् ।
एतस्मिन्नन्तरे रामो वानरान् वाक्यमब्रवीत् ॥ ३६

सर्वे भवन्तस्तिष्ठन्तु कपिराजेन सङ्गताः ।
स ब्रह्मणा दत्तवरस्त्रैलोक्यं बाधते भृशम् ॥ ३७

भवतामर्थसिद्ध्यर्थं कालेन स समागतः ।
अद्यैव क्षमितव्यं मे भवन्तो विगतज्वराः ॥ ३८

सोऽन्तर्धानगतः पापो रावणी रणकर्कशः ।
अदृश्यो निशितान्बाणान् मुमोचाशनिवर्चसः ॥

स रामं लक्ष्मणं चैव घोरैर्नागमयैः शरैः ।
बिभेद समरे क्रुद्धः सर्वगात्रेषु राक्षसः ॥

मायया संवृतस्तत्र मोहयन्राघवौ युधि ।
अदृश्यः सर्वभूतानां कूटयोधी निशाचरः ।
बबन्ध शरबन्धेन भ्रातरौ रामलक्ष्मणौ ॥

तौ तेन पुरुषव्याघ्रौ क्रुद्धेनाशीविषैः शरैः ।
सहसा निहतौ वीरौ तदा प्रैक्षन्त वानराः ॥

प्रकाशरूपस्तु यदा न शक्त-
स्तौ बाधितुं राक्षसराजपुत्रः ।
मायां प्रयोक्तुं समुपाजगाम
बबन्ध तौ राजसुतौ महात्मा ॥

इति चतुश्चत्वारिंशः सर्गः ॥



## पञ्चचत्वारिंशः सर्गः ॥

स तस्य गतिमन्विच्छन् राजपुत्रः प्रतापवान् ।
दिदेशातिबलो रामो दश वानरयूथपान् ॥ १

द्वौ सुषेणस्य दायादौ नीलं च प्लवगर्षभम् ।
अङ्गदं वालिपुत्रं च शरभं च तरस्विनम् ॥ २

द्विविदं च हनूमन्तं सानुप्रस्थं महाबलम् ।
ऋषभं चर्षभस्कन्धमादिदेश परन्तपः ॥ ३

ते संप्रहृष्टा हरयो भीमानुद्यम्य पादपान् ।
आकाशं विविशुः सर्वे मार्गमाणा दिशो दश ॥ ४

तेषां वेगवतां वेगमिषुभिर्वेगवत्तरैः ।
अस्त्रवित्परमास्त्रैस्तु वारयामास रावणिः ॥ ५

तं भीमवेगा हरयो नाराचैः क्षतविग्रहाः ।
अन्धकारे न ददृशुर्मेघैः सूर्यमिवावृतम् ॥ ६

रामलक्ष्मणयोरेव सर्वदेहभिदः शरान् ।
भृशमावेशयामास रावणिः समितिञ्जयः ॥ ७

निरन्तरशरीरौ तौ भ्रातरौ रामलक्ष्मणौ ।
क्रुद्धेनेन्द्रजिता वीरौ पन्नगैः शरतां गतैः ॥ ८

तयोः क्षतजमार्गेण सुस्राव रुधिरं बहु ।
तावुभौ च प्रकाशेते पुष्पिताविव किंशुकौ ॥ ९

ततः पर्यन्तरक्ताक्षो भिन्नाञ्जनचयोपमः ।
रावणिर्भ्रातरौ वाक्यमन्तर्धानगतोऽब्रवीत् ॥ १०

युध्यमानमनालक्ष्यं शक्रोऽपि त्रिदशेश्वरः ।
द्रष्टुमासादितुं वाऽपि न शक्तः किं पुनर्युवाम् ॥ ११

प्रावृताविषुजालेन राघवौ कङ्कपत्रिणा ।
एष रोषपरीतात्मा नयामि यमसादनम् ॥ १२

एवमुक्त्वा तु धर्मज्ञौ भ्रातरौ रामलक्ष्मणौ ।
निर्बिभेद शितैर्बाणैः प्रजहर्ष ननाद च ॥ १३

भिन्नाञ्जनचयश्यामो विस्फार्य विपुलं धनुः ।
भूयो भूयः शरान्घोरान् विससर्ज महामृधे ॥ १४

ततो मर्मसु मर्मज्ञो मज्जयन्निशिताञ्शरान् ।
रामलक्ष्मणयोर्वीरो ननाद च मुहुर्मुहुः ॥ १५

बद्धौ तु शरबन्धेन तावुभौ रणमूर्धनि ।
निमेषान्तरमात्रेण न शेकतुरुदीक्षितुम् ॥ १६

ततो विभिन्नसर्वाङ्गौ शरशल्याचितौ कृतौ ।
ध्वजाविव महेन्द्रस्य रज्जुमुक्तौ प्रकम्पितौ ॥ १७

तौ संप्रचलितौ वीरौ मर्मभेदेन कर्शितौ ।
निपेततुर्महेष्वासौ जगत्यां जगतीपती ॥ १८

तौ वीरशयने वीरौ शयानौ रुधिरोक्षितौ ।
शरवेष्टितसर्वाङ्गावार्तौ परमपीडितौ ॥ १९

न ह्यविद्धं तयोर्गात्रं बभूवाङ्गुलमन्तरम् ।
नानिर्भिन्नं न चास्तब्धमाकराग्रादजिह्मगैः ॥ २०

तौ तु क्रूरेण निहतौ रक्षसा कामरूपिणा ।
असृक् सुस्रुवतुस्तीव्रं जलं प्रस्रवणाविव ॥ २१

पपात प्रथमं रामो विद्धो मर्मसु मार्गणैः ।
क्रोधादिन्द्रजिता येन पुरा शक्रो विनिर्जितः ॥ २२

रुक्मपुङ्खैः प्रसन्नाग्रैरधोगतिभिराशुगैः ।
नाराचैरर्धनाराचैर्भल्लैरञ्जलिकैरपि ।
विव्याध वत्सदन्तैश्च सिंहदंष्ट्रैः क्षुरैस्तथा ॥ २३

स वीरशयने शिश्ये विज्यमादाय कार्मुकम् ।
भिन्नमुष्टिपरीणाहं त्रिनतं रुक्मभूषितम् ॥ २४

बाणपातान्तरे रामं पतितं पुरुषर्षभम् ।
स तत्र लक्ष्मणो दृष्ट्वा निराशो जीवितेऽभवत् ॥ २५

रामं कमलपत्राक्षं शरबन्धपरिक्षतम् ।
शुशोच भ्रातरं दृष्ट्वा पतितं धरणीतले ।
हरयश्चापि तं दृष्ट्वा सन्तापं परमं गताः ॥ २६

बद्धौ तु वीरौ पतितौ शयानौ
तौ वानराः संपरिवार्य तस्थुः ।
समागता वायुसुतप्रमुख्या
विषादमार्ताः परमं च जग्मुः ॥ २७

इति पञ्चचत्वारिंशः सर्गः ॥



## षट्चत्वारिंशः सर्गः ॥

ततो द्यां पृथिवीं चैव वीक्षमाणा वनौकसः ।
ददृशुः सन्ततौ बाणैर्भ्रातरौ रामलक्ष्मणौ ॥ १

दृष्ट्वेवोपरते देवे कृतकर्मणि राक्षसे ।
आजगामाथ तं देशं ससुग्रीवो विभीषणः ॥ २

नीलद्विविदमैन्दाश्च सुषेणसुमुखाङ्गदाः ।
तूर्णं हनुमता सार्धमन्वशोचन्त राघवौ ॥ ३

अचेष्टौ मन्दनिःश्वासौ शोणितौघपरिप्लुतौ ।
शरजालाचितौ स्तब्धौ शयानौ शरतल्पयोः ॥ ४

निःश्वसन्तौ यथा सर्पौ निश्चेष्टौ मन्दविक्रमौ ।
रुधिरस्रावदिग्धाङ्गौ तापनीयाविव ध्वजौ ॥ ५

तौ वीरशयने वीरौ शयानौ मन्दचेष्टितौ ।
यूथपैस्तैः परिवृतौ बाष्पव्याकुललोचनैः ॥ ६

राघवौ पतितौ दृष्ट्वा शरजालसमावृतौ ।
यथा सर्पौ तु निश्चेष्टौ शयानौ मन्दचेष्टितौ ।
बभूवुर्व्यथिताः सर्वे वानराः सविभीषणाः ॥ ७

अन्तरिक्षं निरीक्षन्तो दिशः सर्वाश्च वानराः ।
न चैनं माययाच्छन्नं ददृशू रावणिं रणे ॥ ८

तं तु मायाप्रतिच्छन्नं माययैव विभीषणः ।
वीक्षमाणो ददर्शाथ भ्रातुः पुत्रमवस्थितम् ॥ ९

तमप्रतिमकर्माणमप्रतिद्वन्द्वमाहवे ।
ददर्शान्तर्हितं वीरं वरदानाद्विभीषणः ।
तेजसा यशसा चैव विक्रमेण च संयुतम् ॥ १०

इन्द्रजित्त्वात्मनः कर्म तौ शयानौ समीक्ष्य च ।
उवाच परमप्रीतो हर्षयन्सर्वनैर्ऋतान् ॥ ११

दूषणस्य च हन्तारौ खरस्य च महाबलौ ।
सादितौ मामकैर्बाणैर्भ्रातरौ रामलक्ष्मणौ ॥ १२

नेमौ मोक्षयितुं शक्यावेतस्मादिषुबन्धनात् ।
सर्वैरपि समागम्य सर्षिसङ्घैः सुरासुरैः ॥ १३

यत्कृते चिन्तयानस्य शोकार्तस्य पितुर्मम ।
अस्पृष्ट्वा शयनं गात्रैस्त्रियामा याति शर्वरी ॥ १४

कृत्स्नेयं यत्कृते लङ्का नदी वर्षास्विवाकुला ।
सोऽयं मूलहरोऽनर्थः सर्वेषां निहतो मया ॥ १५

रामस्य लक्ष्मणस्यैव सर्वेषां च वनौकसाम् ।
विक्रमा निष्फलाः सर्वे यथा शरदि तोयदाः ॥ १६

एवमुक्त्वा तु तान्सर्वान् राक्षसान्परिपार्श्वतः ।
यूथपानपि तान्सर्वांस्ताडयामास रावणिः ॥ १७

नीलं नवभिराहत्य मैन्दं च द्विविदं तथा ।
त्रिभिस्त्रिभिरमित्रघ्नस्ततान परमेषुभिः ॥ १८

जाम्बवन्तं महेष्वासो विद्ध्वा बाणेन वक्षसि ।
हनूमतो वेगवतो विससर्ज शरान्दश ॥ १९

गवाक्षं शरभं चैव द्वावप्यमिततेजसौ ।
द्वाभ्यां द्वाभ्यां महावेगो विव्याध युधि रावणिः ॥ २०

गोलाङ्गूलेश्वरं चैव वालिपुत्रमथाङ्गदम् ।
विव्याध बहुभिर्बाणैस्त्वरमाणोऽथ रावणिः ॥ २१

तान्वानरवरान् भित्वा शरैरग्निशिखोपमैः ।
ननाद बलवांस्तत्र महासत्वः स रावणिः ॥ २२

तानर्दयित्वा बाणौघैस्त्रासयित्वा च वानरान् ।
प्रजहास महाबाहुर्वचनं चेदमब्रवीत् ॥ २३

शरबन्धेन घोरेण मया बद्धौ चमूमुखे ।
सहितौ भ्रातरावेतौ निशामयत राक्षसाः ॥ २४

एवमुक्तास्तु ते सर्वे राक्षसाः कूटयोधिनः ।
परं विस्मयमाजग्मुः कर्मणा तेन हर्षिताः ॥ २५

विनेदुश्च महानादान् सर्वतो जलदोपमाः ।
हतो राम इति ज्ञात्वा रावणिं समपूजयन् ॥ २६

निष्पन्दौ तु तदा दृष्ट्वा तावुभौ रामलक्ष्मणौ ।
वसुधायां निरुच्छ्वासौ हतावित्यन्वमन्यत ॥ २७

हर्षेण तु समाविष्ट इन्द्रजित्समितिञ्जयः ।
प्रविवेश पुरीं लङ्कां हर्षयन्सर्वराक्षसान् ॥ २८

रामलक्ष्मणयोर्दृष्ट्वा शरीरे सायकैश्चिते ।
सर्वाणि चाङ्गोपाङ्गानि सुग्रीवं भयमाविशत् ॥ २९

तमुवाच परित्रस्तं वानरेन्द्रं विभीषणः ।
सबाष्पवदनं दीनं शोकव्याकुललोचनम् ॥ ३०

अलं त्रासेन सुग्रीव बाष्पवेगो निगृह्यताम् ।
एवंप्रायाणि युद्धानि विजयो नास्ति नैष्ठिकः ॥ ३१

सशेषभाग्यताऽस्माकं यदि वीर भविष्यति ।
मोहमेतौ प्रहास्येते महात्मानौ महाबलौ ॥ ३२

पर्यवस्थापयात्मानमनाथं मां च वानर ।
सत्यधर्माभिरक्तानां नास्ति मृत्युकृतं भयम् ॥ ३३

एवमुक्त्वा ततस्तस्य जलक्लिन्नेन पाणिना ।
सुग्रीवस्य शुभे नेत्रे प्रममार्ज विभीषणः ॥ ३४

ततः सलिलमादाय विद्यया परिजप्य च ।
सुग्रीवनेत्रे धर्मात्मा स ममार्ज विभीषणः ॥ ३५

प्रमृज्य वदनं तस्य कपिराजस्य धीमतः ।
अब्रवीत्कालसंप्राप्तमसंभ्रममिदं वचः ॥ ३६

न कालः कपिराजेन्द्र वैक्लव्यमनुवर्तितुम् ।
अतिस्नेहोऽप्यकालेऽस्मिन् मरणायोपकल्पते ॥ ३७

तस्मादुत्सृज्य वैक्लव्यं सर्वकार्यविनाशनम् ।
हितं रामपुरोगाणां सैन्यानामनुचिन्त्यताम् ॥ ३८

अथ वा रक्ष्यतां रामो यावत्संज्ञाविपर्ययः ।
लब्धसंज्ञौ हि काकुत्स्थौ भयं नो व्यपनेष्यतः ॥ ३९

नैतत् किञ्चन रामस्य न च रामो मुमूर्षति ।
न ह्येनं हास्यते लक्ष्मीर्दुर्लभा या गतायुषाम् ॥ ४०

तस्मादाश्वासयात्मानं बलं चाश्वासय स्वकम् ।
यावत्कार्याणि सर्वाणि पुनः संस्थापयाम्यहम् ॥ ४१

एते हि फुल्लनयनास्त्रासादागतसाध्वसाः ।
कर्णे कर्णे प्रकथिता हरयो हरिसत्तम ॥ ४२

मां तु दृष्ट्वा प्रधावन्तमनीकं संप्रहर्षितुम् ।
त्यजन्तु हरयस्त्रासं भुक्तपूर्वामिव स्रजम् ॥ ४३

समाश्वास्य तु सुग्रीवं राक्षसेन्द्रो विभीषणः ।
विद्रुतं वानरानीकं तत्समाश्वासयत्पुनः ॥ ४४

इन्द्रजित्तु महामायः सर्वसैन्यसमावृतः ।
विवेश नगरीं लङ्कां पितरं चाभ्युपागमत् ॥ ४५

तत्र रावणमासीनमभिवाद्य कृताञ्जलिः ।
आचचक्षे प्रियं पित्रे निहतौ रामलक्ष्मणौ ॥ ४६

उत्पपात ततो हृष्टः पुत्रं च परिषस्वजे ।
रावणो रक्षसां मध्ये श्रुत्वा शत्रू निपातितौ ॥ ४७

उपाघ्राय स मूर्ध्न्येनं पप्रच्छ प्रीतमानसः ।
पृच्छते च यथावृत्तं पित्रे सर्वं न्यवेदयत् ॥ ४८

यथा तौ शरबन्धेन निश्चेष्टौ निष्प्रभौ कृतौ ।
विस्मित्यान्तर्हितः कृत्वा घोरं तच्छरबन्धनम् ॥ ४९

रावणोऽकारयल्लङ्कां पताकाध्वजमालिनीम् ।
घोषयित्वा तु लङ्कायां प्रहृष्टो राक्षसेश्वरः ।
राघवो लक्ष्मणश्चैव हताविन्द्रजिता रणे ॥ ५०

स हर्षवेगानुगतान्तरात्मा
श्रुत्वा वचस्तस्य महारथस्य ।
जहौ ज्वरं दाशरथेः समुत्थितं
प्रहृष्य वाचाऽभिननन्द पुत्रम् ॥ ५१

इति षट्चत्वारिंशः सर्गः ॥



## सप्तचत्वारिंशः सर्गः ॥

प्रतिप्रविष्टे लङ्कां तु कृतार्थे रावणात्मजे ।
राघवं परिवार्यार्ता ररक्षुर्वानरर्षभाः ॥ १

हनुमानङ्गदो नीलः सुषेणः कुमुदो नलः ।
गजो गवाक्षो गवयः शरभो गन्धमादनः ॥ २

जाम्बवानृषभः सुन्दो रम्भः शतवलिः पृथुः ।
एते सर्वे महोत्साहा वानरा भीमविक्रमाः ॥ ३

व्यूढानीकाश्च यत्ताश्च द्रुमानादाय सर्वतः ।
वीक्षमाणा दिशः सर्वास्तिर्यगूर्ध्वं च वानराः ।
तृणेष्वपि च चेष्टत्सु राक्षसा इति मेनिरे ॥ ४

रावणश्चापि संहृष्टो विसृज्येन्द्रजितं सुतम् ।
आजुहाव ततः सीतारक्षिणी राक्षसीस्तदा ॥ ५

त्रिजटाप्रमुखास्तास्तु शासनात्समुपस्थिताः ।
राक्षस्यो विनयोपेता राक्षसेन्द्रसमीपगाः ।
उवाच च ततो हृष्टो राक्षसेन्द्रो महाबलः ॥ ६

हताविन्द्रजिताऽऽख्यात वैदेह्या रामलक्ष्मणौ ।
पुष्पकं च समारोप्य दर्शयध्वं हतौ रणे ॥ ७

यदाश्रयादवष्टब्धा नेयं मामुपतिष्ठति ।
सोऽस्या भर्ता सह भ्रात्रा निरस्तो रणमूर्धनि ॥ ८

निर्विशङ्का निरुद्विग्ना निरपेक्षा च मैथिली ।
मामुपस्थास्यते सीता सर्वाभरणभूषिता ॥ ९

अद्य कालवशं प्राप्तं रणे रामं सलक्ष्मणम् ।
अवेक्ष्य विनिवृत्ताशा नान्यां गतिमपश्यती ।
अनपेक्षा विशालाक्षी मामुपस्थास्यते स्वयम् ॥ १०

तस्य तद्वचनं श्रुत्वा रावणस्य दुरात्मनः ।
राक्षस्यस्तास्तथेत्युक्त्वा जग्मुर्वै यत्र पुष्पकम् ॥ ११

ततः पुष्पकमादाय राक्षस्यो रावणाज्ञया ।
अशोकवनिकास्थां तां मैथिलीं समुपानयन् ॥ १२

तामादाय तु राक्षस्यो भर्तृशोकपराजिताम् ।
सीतामारोपयामासुर्विमानं पुष्पकं तदा ॥ १३

ततः पुष्पकमारोप्य सीतां त्रिजटया सह ।
जग्मुर्दर्शयितुं तस्यै राक्षस्यो रामलक्ष्मणौ ॥ १४

रावणोऽकारयल्लङ्कां पताकाध्वजमालिनीम् ।
प्राघोषयत हृष्टश्च लङ्कायां राक्षसेश्वरः ।
राघवो लक्ष्मणश्चैव हताविन्द्रजिता रणे ॥ १५

विमानेनापि सीता तु गता त्रिजटया सह ।
ददर्श वानराणां तु सर्वं सैन्यं निपातितम् ॥ १६

प्रहृष्टमनसश्चापि ददर्श पिशिताशनान् ।
वानरांश्चापि दुःखार्तान् रामलक्ष्मणपार्श्वतः ॥ १७

ततः सीता ददर्शोभौ शयानौ शरतल्पयोः ।
लक्ष्मणं चापि रामं च विसंज्ञौ शरपीडितौ ॥ १८

विध्वस्तकवचौ वीरौ विप्रविद्धशरासनौ ।
सायकैश्छिन्नसर्वाङ्गौ शरस्तम्बमयौ क्षितौ ॥ १९

तौ दृष्ट्वा भ्रातरौ तत्र वीरौ सा पुरुषर्षभौ ।
शयानौ पुण्डरीकाक्षौ कुमाराविव पावकी ॥ २०

शरतल्पगतौ वीरौ तथाभूतौ नरर्षभौ ।
दुःखार्ता सुभृशं सीता करुणं विललाप ह ॥ २१

भर्तारमनवद्याङ्गी लक्ष्मणं चासितेक्षणा ।
प्रेक्ष्य पांसुषु वेष्टन्तौ रुरोद जनकात्मजा ॥ २२

सा बाष्पशोकाभिहता समीक्ष्य
तौ भ्रातरौ देवसमप्रभावौ ।
वितर्कयन्ती निधनं तयोः सा
दुःखान्विता वाक्यमिदं जगाद ॥ २३

इति सप्तचत्वारिंशः सर्गः ॥



## अष्टचत्वारिंशः सर्गः ॥

भर्तारं निहतं दृष्ट्वा लक्ष्मणं च महारथम् ।
साश्रुपातं तु करुणं तौ दृष्ट्वा रामलक्ष्मणौ ॥ १

विललाप भृशं सीता करुणं शोककर्शिता ।
आर्यपुत्रेति क्रोशन्ती बहुशो विललाप ह ॥ २

निष्पतन्ती स्वचरणं क्रोशन्ती मधुराक्षरम् ।
उवाच वचनं सीता शोकेन च परिप्लुता ॥ ३

ऊचुर्लाक्षणिका ये मां पुत्रिण्यविधवेति च ।
तेऽद्य सर्वे हते रामे ज्ञानिनोऽनृतवादिनः ॥ ४

यज्वनो महिषीं ये मामूचुः पत्नीं च सत्रिणः ।
तेऽद्य सर्वे हते रामे ज्ञानिनोऽनृतवादिनः ॥ ५

ऊचुः संश्रवणे ये मां द्विजाः कार्तान्तिकाः शुभाम् ।
तेऽद्य सर्वे हते रामे ज्ञानिनोऽनृतवादिनः ॥ ६

वीरपार्थिवपत्नी त्वं ये धन्येति च मां विदुः ।
तेऽद्य सर्वे हते रामे ज्ञानिनोऽनृतवादिनः ॥ ७

इमानि खलु पद्मानि पादयोर्यैः कुलस्त्रियः ।
आधिराज्येऽभिषिच्यन्ते नरेन्द्रैः पतिभिः सह ॥ ८

वैधव्यं यान्ति यैर्नार्यो लक्षणैर्भाग्यदुर्लभाः ।
नात्मनस्तानि पश्यामि पश्यन्ती हतलक्षणा ॥ ९

सत्यनामानि पद्मानि स्त्रीणामुक्तानि लक्षणैः ।
तान्यद्य निहते रामे वितथानि भवन्ति मे ॥ १०

केशाः सूक्ष्माः समा नीला भ्रुवौ चासङ्गते मम ।
वृत्ते चारोमशे जङ्घे दन्ताश्चाविरला मम ॥ ११

शङ्खे नेत्रे करौ पादौ गुल्फावूरू च मे चितौ ।
अनुवृत्तनखाः स्निग्धाः समाश्चाङ्गुलयो मम ॥ १२

स्तनौ चाविरलौ पीनौ ममेमौ मग्नचूचुकौ ।
मग्ना चोत्सङ्गिनी नाभिः पार्श्वोरस्कं च मे चितम् ॥

मम वर्णो मणिनिभो मृदून्यङ्गरुहाणि च ।
प्रतिष्ठितां द्वादशभिर्मामूचुः शुभलक्षणाम् ॥ १४

समग्रयवमच्छिद्रं पाणिपादं च वर्णवत् ।
मन्दस्मितेत्येव च मां कन्यालक्षणिनो विदुः ॥ १५

आधिराज्येऽभिषेको मे ब्राह्मणैः पतिना सह ।
कृतान्तकुशलैरुक्तं तत्सर्वं वितथीकृतम् ॥ १६

यज्वनो महिषीं ये मामूचुः पत्नीं महीभृतः ।
तेऽद्य सर्वे हते रामे ज्ञानिनोऽनृतवादिनः ॥ १७

शोधयित्वा जनस्थानं प्रवृत्तिमुपलभ्य मे ।
तीर्त्वा सागरमक्षोभ्यं भ्रातरौ गोष्पदे हतौ ॥ १८

ननु वारुणमाग्नेयमैन्द्रं वायव्यमेव च ।
अस्त्रं ब्रह्मशिरश्चैव राघवौ प्रत्यपद्यताम् ॥ १९

अदृश्यमानेन रणे मायया वासवोपमौ ।
मम नाथावनाथाया निहतौ रामलक्ष्मणौ ॥ २०

न हि दृष्टिपथं प्राप्य राघवस्य रणे रिपुः ।
जीवन्प्रतिनिवर्तेत यद्यपि स्यान्मनोजवः ॥ २१

न कालस्यातिभारोऽस्ति कृतान्तश्च सुदुर्जयः ।
यत्र रामः सह भ्रात्रा शेते युधि निपातितः ॥ २२

न शोचामि तथा रामं लक्ष्मणं च महारथम् ।
नात्मानं जननीं वाऽपि यथा श्वश्रूं तपस्विनीम् ॥ २३

सा तु चिन्तयते नित्यं समाप्तव्रतमागतम् ।
कदा द्रक्ष्यामि सीतां च रामं च सहलक्ष्मणम् ॥ २४

परिदेवयमानां तां राक्षसी त्रिजटाऽब्रवीत् ।
मा विषादं कृथा देवि भर्ताऽयं तव जीवति ॥ २५

कारणानि च वक्ष्यामि महान्ति सदृशानि च ।
यथेमौ जीवतो देवि भ्रातरौ रामलक्ष्मणौ ॥ २६

न हि कोपपरीतानि हर्षपर्युत्सुकानि च ।
भवन्ति युधि योधानां मुखानि निहते पतौ ॥ २७

इदं विमानं वैदेहि पुष्पकं नाम नामतः ।
दिव्यं त्वां धारयेन्नैवं यद्येतौ गतजीवितौ ॥ २८

हतवीरप्रधाना हि हतोत्साहा निरुद्यमा ।
सेना भ्रमति संख्येषु हतकर्णेव नौर्जले ॥ २९

इयं पुनरसंभ्रान्ता निरुद्विग्ना तरस्विनी ।
सेना रक्षति काकुत्स्थौ मया प्रीत्या निवेदितौ ॥ ३०

सा त्वं भव सुविस्रब्धा अनुमानैः सुखोदयैः ।
अहतौ पश्य काकुत्स्थौ स्नेहादेतद्ब्रवीमि ते ॥ ३१

अनृतं नोक्तपूर्वं मे न च वक्ष्ये कदाचन ।
चारित्रसुखशीलत्वात् प्रविष्टाऽसि मनो मम ॥ ३२

नेमौ शक्यौ रणे जेतुं सेन्द्रैरपि सुरासुरैः ।
तादृशं दर्शनं दृष्ट्वा मया चावेदितं तव ॥ ३३

इदं च सुमहच्चिह्नं शनैः पश्यस्व मैथिलि ।
निःसंज्ञावप्युभावेतौ नैव लक्ष्मीर्वियुज्यते ॥ ३४

प्रायेण गतसत्त्वानां पुरुषाणां गतायुषाम् ।
दृश्यमानेषु वक्त्रेषु परं भवति वैकृतम् ॥ ३५

त्यज शोकं च दुःखं च मोहं च जनकात्मजे ।
रामलक्ष्मणयोरर्थे नाद्य शक्यमजीवितुम् ॥ ३६

श्रुत्वा तु वचनं तस्याः सीता सुरसुतोपमा ।
कृताञ्जलिरुवाचेदमेवमस्त्विति मैथिली ॥ ३७

विमानं पुष्पकं तत्तु सन्निवार्य मनोजवम् ।
दीना त्रिजटया सीता लङ्कामेव प्रवेशिता ॥ ३८

ततस्त्रिजटया सार्धं पुष्पकादवरुह्य सा ।
अशोकवनिकामेव राक्षसीभिः प्रवेशिता ॥ ३९

प्रविश्य सीता बहुवृक्षषण्डां
तां राक्षसेन्द्रस्य विहारभूमिम् ।
संप्रेक्ष्य सञ्चिन्त्य च राजपुत्रौ
परं विषादं समुपाजगाम ॥ ४०

इति अष्टचत्वारिंशः सर्गः ॥



## एकोनपञ्चाशः सर्गः ॥

घोरेण शरबन्धेन बद्धौ दशरथात्मजौ ।
निःश्वसन्तौ यथा नागौ शयानौ रुधिरोक्षितौ ॥ १

सर्वे ते वानरश्रेष्ठाः ससुग्रीवा महाबलाः ।
परिवार्य महात्मानौ तस्थुः शोकपरिप्लुताः ॥ २

एतस्मिन्नन्तरे रामः प्रत्यबुध्यत वीर्यवान् ।
स्थिरत्वात्सत्त्वयोगाच्च शरैः सन्दानितोऽपि सन् ॥ ३

प्रत्यवेक्ष्य तदात्मानं शोणितौघपरिप्लुतम् ।
विललाप तदा रामो मन्दमश्रूण्यवर्तयत् ॥ ४

लक्ष्मणं पतितं दृष्ट्वा मातृगोत्रमुदाहरन् ।
ततो दृष्ट्वा सरुधिरं विषण्णं गाढमर्पितम् ।
भ्रातरं दीनवदनं पर्यदेवयदातुरः ॥ ५

किं नु मे सीतया कार्यं किं कार्यं जीवितेन वा ।
शयानं योऽद्य पश्यामि भ्रातरं युधि निर्जितम् ॥ ६

शक्या सीतासमा नारी मर्त्यलोके विचिन्वता ।
न लक्ष्मणसमो भ्राता सचिवः सांपरायिकः ॥ ७

देशे देशे कलत्राणि देशे देशे च बान्धवाः ।
तं तु देशं न पश्यामि यत्र भ्राता सहोदरः ॥ ८

परित्यक्ष्याम्यहं प्राणान् वानराणां तु पश्यताम् ।
यदि पञ्चत्वमापन्नः सुमित्रानन्दवर्धनः ॥ ९

किं नु वक्ष्यामि कौसल्यां मातरं किं नु कैकयीम् ।
कथमम्बां सुमित्रां च पुत्रदर्शनलालसाम् ॥ १०

विवत्सां वेपमानां च क्रोशन्तीं कुररीमिव ।
कथमाश्वासयिष्यामि यदि यास्यामि तं विना ॥ ११

कथं वक्ष्यामि शत्रुघ्नं भरतं च यशस्विनम् ।
मया सह वनं यातो विना तेनागतः पुनः ॥ १२

उपालम्भं न शक्ष्यामि सोढुं बत सुमित्रया ।
इहैव देहं त्यक्ष्यामि न हि जीवितुमुत्सहे ॥ १३

धिङ् मां दुष्कृतकर्माणमनार्यं यत्कृते ह्यसौ ।
लक्ष्मणः पतितः शेते शरतल्पे गतासुवत् ॥ १४

त्वं नित्यं सुविषण्णं मामाश्वासयसि लक्ष्मण ।
गतासुर्नाद्य शक्नोषि मामार्तमभिभाषितुम् ॥ १५

येनाद्य निहता युद्धे राक्षसा विनिपातिताः ।
तस्यामेव क्षितौ वीरः स शेते निहतः परैः ॥ १६

तथा हि शरतल्पस्थं स्वशोणितपरिप्लुतम् ।
शरजालावृतं भूमौ पश्याम्येनमनाथवत् ॥ १७

शयानः शरतल्पेऽस्मिन् स्वशोणितपरिप्लुतः ।
शरजालैश्चितो भाति भास्करोऽस्तमिव व्रजन् ॥ १८

बाणाभिहतमर्मत्वान्न शक्नोत्यभिभाषितुम् ।
रुजा चाब्रुवतोऽप्यस्य दृष्टिरागेण सूच्यते ॥ १९

यथैव मां वनं यान्तमनुयातो महाद्युतिः ।
अहमप्यनुयास्यामि तथैवैनं यमक्षयम् ॥ २०

इष्टबन्धुजनो नित्यं मां च नित्यमनुव्रतः ।
इमामद्य गतोऽवस्थां ममानार्यस्य दुर्नयैः ॥ २१

सुरुष्टेनापि वीरेण लक्ष्मणेन न संस्मरे ।
परुषं विप्रियं वाऽपि श्रावितं मे कदाचन ॥ २२

विससर्जैकवेगेन पञ्चबाणशतानि यः ।
इष्वस्त्रेष्वधिकस्तस्मात् कार्तवीर्याच्च लक्ष्मणः ॥ २३

अस्त्रैरस्त्राणि यो हन्याच्छक्रस्यापि महात्मनः ।
सोऽयमुर्व्यां हतः शेते महार्हशयनोचितः ॥ २४

तच्च मिथ्याप्रलप्तं मां प्रधक्ष्यति न संशयः ।
यन्मया न कृतो राजा राक्षसानां विभीषणः ॥ २५

अस्मिन्मुहूर्ते सुग्रीव प्रतियातुमितोऽर्हसि ।
मत्वा हीनं मया राजन् रावणोऽभिद्रवेद्बली ॥ २६

अङ्गदं तु पुरस्कृत्य ससैन्यः ससुहृज्जनः ।
सागरं तर सुग्रीव नीलेन च नलेन च ॥ २७

कृतं हनुमता कार्यं यदन्यैर्दुष्करं रणे ।
ऋक्षराजेन तुष्यामि गोलाङ्गूलाधिपेन च ॥ २८

अङ्गदेन कृतं कर्म मैन्देन द्विविदेन च ।
सुषेणं चापि तुष्यामि नीलेन च नलेन च ।
युद्धं केसरिणा संख्ये घोरं सम्पातिना कृतम् ॥ २९

गवयेन गवाक्षेण शरभेण गजेन च ।
अन्यैश्च हरिभिर्युद्धं मदर्थे त्यक्तजीवितैः ।
न चातिक्रमितुं शक्यं दैवं सुग्रीव मानुषैः ॥ ३०

यत्तु शक्यं वयस्येन सुहृदा च परन्तप ।
कृतं सुग्रीव तत्सर्वं भवता धर्मभीरुणा ॥ ३१

मित्रकार्यं कृतमिदं भवद्भिर्वानरर्षभाः ।
अनुज्ञाता मया सर्वे यथेष्टं गन्तुमर्हथ ॥ ३२

शुश्रुवुस्तस्य ते सर्वे वानराः परिदेवितम् ।
वर्तयाञ्चक्रुरश्रूणि नेत्रैः कृष्णेतरेक्षणाः ॥ ३३

ततः सर्वाण्यनीकानि स्थापयित्वा विभीषणः ।
आजगाम गदापाणिस्त्वरितो यत्र राघवः ॥ ३४

तं दृष्ट्वा त्वरितं यान्तं नीलाञ्जनचयोपमम् ।
वानरा दुद्रुवुः सर्वे मन्यमानास्तु रावणिम् ॥ ३५

इति एकोनपञ्चाशः सर्गः ॥



## पञ्चाशः सर्गः ॥

अथोवाच महातेजा हरिराजो महाबलः ।
किमियं व्यथिता सेना मूढवातेव नौर्जले ॥ १

सुग्रीवस्य वचः श्रुत्वा वालिपुत्रोऽङ्गदोऽब्रवीत् ।
न त्वं पश्यसि रामं च लक्ष्मणं च महाबलम् ॥ २

शरजालाचितौ वीरावुभौ दशरथात्मजौ ।
शरतल्पे महात्मानौ शयानौ रुधिरोक्षितौ ॥ ३

अथाब्रवीद्वानरेन्द्रः सुग्रीवः पुत्रमङ्गदम् ।
नानिमित्तमिदं मन्ये भवितव्यं भयेन तु ॥ ४

विषण्णवदना ह्येते त्यक्तप्रहरणा दिशः ।
प्रपलायन्ति हरयस्त्रासादुत्फुल्ललोचनाः ॥ ५

अन्योन्यस्य न लज्जन्ते न निरीक्षन्ति पृष्ठतः ।
विप्रकर्षन्ति चान्योन्यं पतितं लङ्घयन्ति च ॥ ६

एतस्मिन्नन्तरे वीरो गदापाणिर्विभीषणः ।
सुग्रीवं वर्धयामास राघवं च निरैक्षत ॥ ७

विभीषणं तं सुग्रीवो दृष्ट्वा वानरभीषणम् ।
ऋक्षराजं समीपस्थं जाम्बवन्तमुवाच ह ॥ ८

विभीषणोऽयं संप्राप्तो यं दृष्ट्वा वानरर्षभाः ।
द्रवन्त्यागतसन्त्रासा रावणात्मजशङ्कया ॥ ९

शीघ्रमेतान्सुवित्रस्तान् बहुधा विप्रधावितान् ।
पर्यवस्थापयाख्याहि विभीषणमुपस्थितम् ॥ १०

सुग्रीवेणैवमुक्तस्तु जाम्बवानृक्षपार्थिवः ।
वानरान्सान्त्वयामास सन्निरुध्य प्रधावतः ॥ ११

ते निवृत्ताः पुनः सर्वे वानरास्त्यक्तसंभ्रमाः ।
ऋक्षराजवचः श्रुत्वा तं च दृष्ट्वा विभीषणम् ॥ १२

विभीषणस्तु रामस्य दृष्ट्वा गात्रं शरैश्चितम् ।
लक्ष्मणस्य च धर्मात्मा बभूव व्यथितेन्द्रियः ॥ १३

जलक्लिन्नेन हस्तेन तयोर्नेत्रे प्रमृज्य च ।
शोकसम्पीडितमना रुरोद विललाप च ॥ १४

इमौ तौ सत्त्वसम्पन्नौ विक्रान्तौ प्रियसंयुगौ ।
इमामवस्थां गमितौ राक्षसैः कूटयोधिभिः ॥ १५

भ्रातुः पुत्रेण मे तेन दुष्पुत्रेण दुरात्मना ।
राक्षस्या जिह्मया बुद्धया चालितावृजुविक्रमौ ॥ १६

शरैरिमावलं विद्धौ रुधिरेण समुक्षितौ ।
वसुधायामिमौ सुप्तौ दृश्येते शल्यकाविव ॥ १७

ययोर्वीर्यमुपाश्रित्य प्रतिष्ठा कांक्षिता मया ।
तावुभौ देहनाशाय प्रसुप्तौ पुरुषर्षभौ ॥ १८

जीवन्नद्य विपन्नोऽस्मि नष्टराज्यमनोरथः ।
प्राप्तप्रतिज्ञश्च रिपुः सकामो रावणः कृतः ॥ १९

एवं विलपमानं तं परिष्वज्य विभीषणम् ।
सुग्रीवः सत्वसम्पन्नो हरिराजोऽब्रवीदिदम् ॥ २०

राज्यं प्राप्स्यसि धर्मज्ञ लङ्कायां नात्र संशयः ।
रावणः सह पुत्रेण स कामं नेह लप्स्यते ॥ २१

शरसंपीडितावेत्रावुभौ राघवलक्ष्मणौ ।
त्यक्त्वा मोहं वधिष्येते सगणं रावणं रणे ॥ २२

तमेवं सान्त्वयित्वा तु समाश्वास्य च राक्षसम् ।
सुषेणं श्वशुरं पार्श्वे सुग्रीवस्तमुवाच ह ॥ २३

सह शूरैर्हरिगणैर्लब्धसंज्ञावरिन्दमौ ।
गच्छ त्वं भ्रातरौ गृह्य किष्किन्धां रामलक्ष्मणौ ॥ २४

अहं तु रावणं हत्वा सपुत्रं सहबान्धवम् ।
मैथिलीमानयिष्यामि शक्रो नष्टामिव श्रियम् ॥ २५

श्रुत्वैतद्वानरेन्द्रस्य सुषेणो वाक्यमब्रवीत् ।
गरुडाधिष्ठितावेतावुभौ राघवलक्ष्मणौ ॥ २६

त्यक्त्वा मोहं वधिष्येते महात्मानौ महाबलौ ।
देवासुरमहद्युद्धमनुभूतं सुदारुणम् ॥ २७

तदा स्म दानवा देवाञ्शरसंस्पर्शकोविदाः ।
निजघ्नुः शस्त्रविदुषश्छादयन्तो मुहुर्मुहुः ॥ २८

तानार्तान्नष्टसंज्ञांश्च परासूंश्च बृहस्पतिः ।
विद्याभिर्मन्त्रयुक्ताभिरोषधीभिश्चिकित्सति ॥ २९

तान्यौषधान्यानयितुं क्षीरोदं यान्तु सागरम् ।
जवेन वानराः शीघ्रं सम्पातिपनसादयः ॥ ३०

हरयस्ते विजानन्ति पार्वतीस्ता महौषधीः ।
सञ्जीवकरणीं दिव्यां विशल्यां देवनिर्मितां ॥ ३१

चन्द्रश्च नाम द्रोणश्च क्षीरोदे सागरोत्तमे ।
अमृतं यत्र मथितं तत्र ते परमौषधी ॥ ३२

ते तत्र निहिते देवैः पर्वते परमौषधी ।
अयं वायुसुतो राजन् हनुमांस्तत्र गच्छतु ॥ ३३

एतस्मिन्नन्तरे वायुर्मेघाश्चापि सविद्युतः ।
पर्यस्यन्सागरे तोयं कम्पयन्निव पर्वतान् ॥ ३४

महता पक्षवातेन सर्वद्वीपमहाद्रुमाः ।
निपेतुर्भग्नविटपाः समूला लवणाम्भसि ॥ ३५

अभवन्पन्नगास्त्रस्ता भोगिनस्तत्रवासिनः ।
शीघ्रं सर्वाणि यादांसि जग्मुश्च लवणार्णवम् ॥ ३६

ततो मुहूर्ताद्गरुडं वैनतेयं महाबलम् ।
वानरा ददृशुः सर्वे ज्वलन्तमिव पावकम् ॥ ३७

तमागतमभिप्रेक्ष्य नागास्ते विप्रदुद्रुवुः ।
यैस्तौ सत्पुरुषौ बद्धौ शरभूतैर्महाबलौ ॥ ३८

ततः सुपर्णः काकुत्स्थौ दृष्ट्वा प्रत्यभिनन्दितः ।
विममर्श च पाणिभ्यां मुखे चन्द्रसमप्रभे ॥ ३९

वैनतेयेन संस्पृष्टास्तयोः संरुरुहुर्व्रणाः ।
सुवर्णे च तनू स्निग्धे तयोराशु बभूवतुः ॥ ४०

तेजो वीर्यं बलं चौज उत्साहश्च महागुणः ।
प्रदर्शनं च बुद्धिश्च स्मृतिश्च द्विगुणं तयोः ॥ ४१

तावुत्थाप्य महावीर्यौ गरुडो वासवोपमौ ।
उभौ तौ सस्वजे हृष्टौ रामश्चैनमुवाच ह ॥ ४२

भवत्प्रसादाद्व्यसनं रावणिप्रभवं महत् ।
आवामिह व्यतिक्रान्तौ शीघ्रं च बलिनौ कृतौ ॥ ४३

यथा तातं दशरथं यथाऽजं च पितामहम् ।
तथा भवन्तमासाद्य हृदयं मे प्रसीदति ॥ ४४

को भवान् रूपसम्पन्नो दिव्यस्रगनुलेपनः ।
वसानो विरजे वस्त्रे दिव्याभरणभूषितः ॥ ४५

तमुवाच महातेजा वैनतेयो महाबलः ।
पतत्रिराजः प्रीतात्मा हर्षपर्याकुलेक्षणः ॥ ४६

अहं सखा ते काकुत्स्थ प्रियः प्राणो बहिश्चरः ।
गरुत्मानिह संप्राप्तो युवाभ्यां साह्यकारणात् ॥ ४७

असुरा वा महावीर्या दानवा वा महाबलाः ।
सुराश्चापि सगन्धर्वाः पुरस्कृत्य शतक्रतुम् ॥ ४८

नेमं मोक्षयितुं शक्ताः शरबन्धं सुदारुणम् ।
मायाबलादिन्द्रजिता निर्मितं क्रूरकर्मणा ॥ ४९

एते नागाः काद्रवेयास्तीक्ष्णदंष्ट्रा विषोल्बणाः ।
रक्षोमायाप्रभावेन शरा भूत्वा त्वदाश्रिताः ॥ ५०

सभाग्यश्चासि धर्मज्ञ राम सत्यपराक्रम ।
लक्ष्मणेन सह भ्रात्रा समरे रिपुघातिना ॥ ५१

इमं श्रुत्वा तु वृत्तान्तं त्वरमाणोऽहमागतः ।
सहसा युवयोः स्नेहात् सखित्वमनुपालयन् ॥ ५२

मोक्षितौ च महाघोरादस्मात्सायकबन्धनात् ।
अप्रमादश्च कर्तव्यो युवाभ्यां नित्यमेव हि ॥ ५३

प्रकृत्या राक्षसाः सर्वे संग्रामे कूटयोधिनः ।
शूराणां शुद्धभावानां भवतामार्जवं बलम् ॥ ५४

तन्न विश्वसितव्यं वो राक्षसानां रणाजिरे ।
एतेनैवोपमानेन नित्य जिह्मा हि राक्षसाः ॥ ५५

एवमुक्त्वा ततो रामं सुपर्णः सुमहाबलः ।
परिष्वज्य सुहृत्स्निग्धमाप्रष्टुमुपचक्रमे ॥ ५६

सखे राघव धर्मज्ञ रिपूणामपि वत्सल ।
अभ्यनुज्ञातुमिच्छामि गमिष्यामि यथागतम् ॥ ५७

न च कौतूहलं कार्यं सखित्वं प्रति राघव ।
कृतकर्मा रणे वीर सखित्वमनुवेत्स्यसि ॥ ५८

बालवृद्धावशेषां तु लङ्कां कृत्वा शरोर्मिभिः ।
रावणं च रिपुं हत्वा सीतां समुपलप्स्यसे ॥ ५९

इत्येवमुक्त्वा वचनं सुपर्णः शीघ्रविक्रमः ।
रामं च विरुजं कृत्वा मध्ये तेषां वनौकसाम् ॥ ६०

प्रदक्षिणं ततः कृत्वा परिष्वज्य च वीर्यवान् ।
जगामाकाशमाविश्य सुपर्णः पवनो यथा ॥ ६१

विरुजौ राघवौ दृष्ट्वा ततो वानरयूथपाः ।
सिंहनादांस्तदा नेदुर्लाङ्गूलान् दुधुवुश्च ते ॥ ६२

ततो भेरीः समाजघ्नुर्मृदङ्गांश्चाप्यनादयन् ।
दध्मुः शङ्खांश्च हृष्टास्ते क्ष्वेलन्त्यपि यथापुरम् ॥ ६३

आस्फोट्यास्फोट्य विक्रान्ता वानरा नगयोधिनः ।
द्रुमानुत्पाट्य विविधांस्तस्थुः शतसहस्रशः ॥ ६४

विसृजन्तो महानादांस्त्रासयन्तो निशाचरान् ।
लङ्काद्वाराण्युपाजग्मुर्योद्धुकामाः प्लवङ्गमाः ॥ ६५

ततस्तु भीमस्तुमुलो निनादो
बभूव शाखामृगयूथपानाम् ।
क्षये निदाघस्य यथा घनानां
नादः सुभीमो नदतां निशीथे ॥ ६६

इति पञ्चाशः सर्गः ॥



## एकपञ्चाशः सर्गः ॥

तेषां सुतुमुलं शब्दं वानराणां तरस्विनाम् ।
नर्दतां राक्षसैः सार्धं तदा शुश्राव रावणः ॥ १

स्निग्धगम्भीरनिर्घोषं श्रुत्वा च निनदं भृशम् ।
सचिवानां ततस्तेषां मध्ये वचनमब्रवीत् ॥ २

यथाऽसौ संप्रहृष्टानां वानराणां समुत्थितः ।
बहूनां सुमहानादो मेघानामिव गर्जताम् ॥ ३

व्यक्तं सुमहती प्रीतिरेतेषां नात्र संशयः ।
तथा हि विपुलैर्नादैश्चुक्षुभे वरुणालयः ॥ ४

तौ तु बद्धौ शरैस्तीक्ष्णैर्भ्रातरौ रामलक्ष्मणौ ।
अयं च सुमहान्नादः शङ्कां जनयतीव मे ॥ ५

एतत्तु वचनं चोक्त्वा मन्त्रिणो राक्षसेश्वरः ।
उवाच नैर्ऋतांस्तत्र समीपपरिवर्तिनः ॥ ६

ज्ञायतां तूर्णमेतेषां सर्वेषां वनचारिणाम् ।
शोककाले समुत्पन्ने हर्षकारणमुत्थितम् ॥ ७

तथोक्तास्तेन संभ्रान्ताः प्राकारमधिरुह्य च ।
ददृशुः पालितां सेनां सुग्रीवेण महात्मना ॥ ८

तौ च मुक्तौ सुघोरेण शरबन्धेन राघवौ ।
समुत्थितौ महाभागौ विषेदुः प्रेक्ष्य राक्षसाः ॥ ९

सन्त्रस्तहृदयाः सर्वे प्राकारादवरुह्य ते ।
विषण्णवदना घोरा राक्षसेन्द्रमुपस्थिताः ॥ १०

तदप्रियं दीनमुखा रावणस्य निशाचराः ।
कृत्स्नं निवेदयामासुर्यथावद्वाक्यकोविदाः ॥ ११

यौ ताविन्द्रजिता युद्धे भ्रातरौ रामलक्ष्मणौ ।
निबद्धौ शरबन्धेन निष्प्रकम्पभुजौ कृतौ ॥ १२

विमुक्तौ शरबन्धेन तौ दृश्येते रणाजिरे ।
पाशानिव गजौ छित्वा गजेन्द्रसमविक्रमौ ॥ १३

तच्छ्रुत्वा वचनं तेषां राक्षसेन्द्रो महाबलः ।
चिन्ताशोकसमाक्रान्तो विषण्णवदनोऽब्रवीत् ॥ १४

घोरैर्दत्तवरैर्बद्धौ शरैराशीविषोपमैः ।
अमोघैः सूर्यसङ्काशैः प्रमथ्येन्द्रजिता युधि ॥ १५

तदस्त्रबन्धमासाद्य यदि मुक्तौ रिपू मम ।
संशयस्थमिदं सर्वमनुपश्याम्यहं बलम् ॥ १६

निष्फलाः खलु संवृत्ताः शरा वासुकितेजसः ।
आदत्तं यैस्तु संग्रामे रिपूणां मम जीवितम् ॥ १७

एवमुक्त्वा तु संक्रुद्धो निःश्वसन्नुरगो यथा ।
अब्रवीद्रक्षसां मध्ये धूम्राक्षं नाम राक्षसम् ॥ १८

बलेन महता युक्तो रक्षसां भीमविक्रम ।
त्वं वधायाभिनिर्याहि रामस्य सह वानरैः ॥ १९

एवमुक्तस्तु धूम्राक्षो राक्षसेन्द्रेण धीमता ।
कृत्वा प्रणामं संहृष्टो निर्जगाम नृपालयात् ॥ २०

अभिनिष्क्रम्य तद्द्वारं बलाध्यक्षमुवाच ह ।
त्वरयस्व बलं तूर्णं किं चिरेण युयुत्सतः ॥ २१

धूम्राक्षवचनं श्रुत्वा बलाध्यक्षो बलानुगः ।
बलमुद्योजयामास रावणस्याज्ञया द्रुतम् ॥ २२

ते बद्धघण्टा बलिनो घोररूपा निशाचराः ।
विनद्यमानाः संहृष्टा धूम्राक्षं पर्यवारयन् ॥ २३

विविधायुधहस्ताश्च शूलमुद्गरपाणयः ।
गदाभिः पट्टसैर्दण्डैरायसैर्मुसलैर्भृशम् ॥ २४

परिघैर्भिण्डिपालैश्च भल्लैः प्रासैः परश्वधैः ।
निर्ययू राक्षसा दिग्भ्यो नर्दन्तो जलदा यथा ॥ २५

रथैः कवचिनस्त्वन्ये ध्वजैश्च समलंकृतैः ।
सुवर्णजालविहितैः खरैश्च विविधाननैः ॥ २६

हयैः परमशीघ्रैश्च गजेन्द्रैश्च मदोत्कटैः ।
निर्ययू राक्षसव्याघ्रा व्याघ्रा इव दुरासदाः ॥ २७

वृकसिंहमुखैर्युक्तं खरैः कनकभूषणैः ।
आरुरोह रथं दिव्यं धूम्राक्षः खरनिःस्वनः ॥ २८

स निर्यातो महावीर्यो धूम्राक्षो राक्षसैर्वृतः ।
प्रहसन् पश्चिमद्वारं हनूमान् यत्र यूथपः ॥ २९

रथप्रवरमास्थाय खरयुक्तं खरस्वनम् ।
प्रयान्तं तु महाघोरं राक्षसं भीमविक्रमम् ॥ ३०

अन्तरिक्षगता घोराः शकुनाः प्रत्यवारयन् ।
रथशीर्षे महाभीमो गृध्रश्च निपपात ह ॥ ३१

ध्वजाग्रे ग्रथिताश्चैव निपेतुः कुणपाशनाः ।
रुधिरार्द्रो महाञ्श्वेतः कबन्धः पतितो भुवि ॥ ३२

विस्वरं चोत्सृजन्नादं धूम्राक्षस्य समीपतः ।
ववर्ष रुधिरं देवः सञ्चचाल च मेदिनी ॥ ३३

प्रतिलोमं ववौ वायुर्निर्घातसमनिःस्वनः ।
तिमिरौघावृतास्तत्र दिशश्च न चकाशिरे ॥ ३४

स तूत्पातांस्ततो दृष्ट्वा राक्षसानां भयावहान् ।
प्रादुर्भूतान्सुघोरांश्च धूम्राक्षो व्यथितोऽभवत् ।
मुमुहू राक्षसाः सर्वे धूम्राक्षस्य पुरःसराः ॥ ३५

ततः सुभीमो बहुभिर्निशाचरै-
वृतोऽभिनिष्क्रम्य रणोत्सुको बली ।
ददर्श तां राघवबाहुपालितां
महौघकल्पां बहुवानरीं चमूम् ॥ ३६

इति एकपञ्चाशः सर्गः ॥



## द्विपञ्चाशः सर्गः ॥

---

धूम्राक्षं प्रेक्ष्य निर्यान्तं राक्षसं भीमविक्रमम् ।
विनेदुर्वानराः सर्वे प्रहृष्टा युद्धकाङ्क्षिणः ॥ १

तेषां सुतुमुलं युद्धं सञ्जज्ञे कपिरक्षसाम् ।
अन्योन्यं पादपैर्घोरं निघ्नतां शूलमुद्गरैः ।
घोरैश्च परिघैश्चित्रैस्त्रिशूलैश्चापि संहतैः ॥ २

राक्षसैर्वानरा घोरैर्विनिकृत्ताः समन्ततः ।
वानरै राक्षसाश्चापि द्रुमैर्भूमौ समीकृताः ॥ ३

राक्षसास्त्वभिसंक्रुद्धा वानरान्निशितैः शरैः ।
विव्यधुर्घोरसङ्काशैः कङ्कपत्रैरजिह्मगैः ॥ ४

ते गदाभिश्च भीमाभिः पट्टसैः कूटमुद्गरैः ।
घोरैश्च परिघैश्चित्रैस्त्रिशूलैश्चापि संशितैः ॥ ५

विदार्यमाणा रक्षोभिर्वानरास्ते महाबलाः ।
अमर्षाज्जनितोद्धर्षाश्चक्रुः कर्माण्यभीतवत् ॥ ६

शरनिर्भिन्नगात्रास्ते शूलनिर्भिन्नदेहिनः ।
जगृहुस्ते द्रुमांस्तत्र शिलाश्च हरियूथपाः ॥ ७

ते भीमवेगा हरयो नर्दमानास्ततस्ततः ।
ममन्थू राक्षसान् भीमान्नामानि च बभाषिरे ॥ ८

तद्बभूवाद्भुतं घोरं युद्धं वानररक्षसाम् ।
शिलाभिर्विविधाभिश्च बहुशाखैश्च पादपैः ॥ ९

राक्षसा मथिताः केचिद्वानरैर्जितकाशिभिः ।
ववमू रुधिरं केचिन्मुखै रुधिरभोजनाः ॥ १०

पार्श्वेषु दारिताः केचित् केचिद्राशीकृता द्रुमैः ।
शिलाभिश्चूर्णिताः केचित् केचिद्दन्तैर्विदारिताः ॥ ११

ध्वजैर्विमथितैर्भग्नैः खरैश्च विनिपातितैः ।
रथैर्विध्वंसितैः केचिद्व्यथिता रजनीचरैः ॥ १२

गजेन्द्रैः पर्वताकारैः पर्वताग्रैर्वनौकसाम् ।
मथितैर्वाजिभिः कीर्णं सारोहैर्वसुधातलम् ॥ १३

वानरैर्भीमविक्रान्तैराप्लुत्याप्लुत्य वेगितैः ।
राक्षसाः करजैस्तीक्ष्णैर्मुखेषु विनिकर्तिताः ॥ १४

विवर्णवदना भूयो विप्रकीर्णशिरोरुहाः ।
गूढाः शोणितगन्धेन निपेतुर्धरणीतले ॥ १५

अन्ये परमसंक्रुद्धा राक्षसा भीमनिःस्वनाः ।
तलैरेवाभिधावन्ति वज्रस्पर्शसमैर्हरीन् ॥ १६

वानरैरापतन्तस्ते वेगिता वेगवत्तरैः ।
मुष्टिभिश्चरणैर्दन्तैः पादपैश्चावपोथिताः ।
वानरैर्भिद्यमानास्ते राक्षसा विप्रदुद्रुवुः ॥ १७

सैन्यं तु विद्रुतं दृष्ट्वा धूम्राक्षो राक्षसर्षभः ।
क्रोधेन कदनं चक्रे वानराणां युयुत्सताम् ॥ १८

प्रासैः प्रमथिताः केचिद्वानराः शोणितस्रवाः ।
मुद्गरैराहताः केचित् पतिता धरणीतले ॥ १९

परिघैर्मथिताः केचिद्भिण्डिपालैर्विदारिताः ।
पट्टसैराहताः केचिद्विह्वलन्तो गतासवः ॥ २०

केचिद्विनिहता भूमौ रुधिरार्द्रा वनौकसः ।
केचिद्विद्राविता नष्टाः सबलै राक्षसैर्युधि ॥ २१

विभिन्नहृदयाः केचिदेकपार्श्वेन दारिताः ।
विदारितास्त्रिशूलैश्च केचिदान्त्रैर्विनिःसृताः ॥ २२

तत्सुभीमं महायुद्धं हरिराक्षससंकुलम् ।
प्रबभौ शब्दबहुलं शिलापादपसंकुलम् ॥ २३

धनुर्ज्यातन्त्रिमधुरं हिक्कातालसमन्वितम् ।
मन्दस्तनितसङ्गीतं युद्धगान्धर्वमाबभौ ॥ २४

धूम्राक्षस्तु धनुष्पाणिर्वानरान् रणमूर्धनि ।
हसन्विद्रावयामास दिशस्तान्शरवृष्टिभिः ॥ २५

धूम्राक्षेणार्दितं सैन्यं व्यथितं दृश्य मारुतिः ।
अभ्यवर्तत संक्रुद्धः प्रगृह्य विपुलां शिलाम् ॥ २६

क्रोधाद्द्विगुणताम्राक्षः पितृतुल्यपराक्रमः ।
शिलां तां पातयामास धूम्राक्षस्य रथं प्रति ॥ २७

आपतन्तीं शिलां दृष्ट्वा गदामुद्यम्य संभ्रमात् ।
रथादाप्लुत्य वेगेन वसुधायां व्यतिष्ठत ॥ २८

सा प्रमथ्य रथं तस्य निपपात शिला भुवि ।
सचक्रकूबरं साश्वं सध्वजं सशरासनम् ॥ २९

स भङ्क्त्वा तु रथं तस्य हनुमान्मारुतात्मजः ।
रक्षसां कदनं चक्रे सस्कन्धविटपैर्द्रुमैः ॥ ३०

विभिन्नशिरसो भूत्वा राक्षसाः शोणितोक्षिताः ।
द्रुमैः प्रमथिताश्चान्ये निपेतुर्धरणीतले ॥ ३१

विद्राव्य राक्षसं सैन्यं हनुमान्मारुतात्मजः ।
गिरेः शिखरमादाय धूम्राक्षमभिदुद्रुवे ॥ ३२

तमापतन्तं धूम्राक्षो गदामुद्यम्य वीर्यवान् ।
विनर्दमानः सहसा हनुमन्तमभिद्रवत् ॥ ३३

तस्य क्रुद्धस्य वेगेन गदां तां बहुकण्टकाम् ।
पातयामास धूम्राक्षो मस्तके तु हनूमतः ॥ ३४

ताडितः स तया तत्र गदया भीमरूपया ।
स कपिर्मारुतबलस्तं प्रहारमचिन्तयन् ॥ ३५

धूम्राक्षस्य शिरोमध्ये गिरिशृङ्गमपातयत् ॥ ३६

स विह्वलितसर्वाङ्गो गिरिशृङ्गेण ताडितः ।
पपात सहसा भूमौ विकीर्ण इव पर्वतः ॥ ३७

धूम्राक्षं निहतं दृष्ट्वा हतशेषा निशाचराः ।
त्रस्ताः प्रविविशुर्लङ्कां वध्यमानाः प्लवङ्गमैः ॥ ३८

स तु पवनसुतो निहत्य शत्रुं
क्षतजवहाः सरितश्च सन्निकीर्य ।
रिपुवधजनितश्रमो महात्मा
मुदमगमत्कपिभिः सुपूज्यमानः ॥ ३९

इति द्विपञ्चाशः सर्गः ॥



## त्रिपञ्चाशः सर्गः ॥

धूम्राक्षं निहतं श्रुत्वा रावणो राक्षसेश्वरः ।
क्रोधेन महताऽऽविष्टो निःश्वसन्नुरगो यथा ॥ १

दीर्घमुष्णं विनिःश्वस्य क्रोधेन कलुषीकृतः ।
अब्रवीद्राक्षसं शूरं वज्रदंष्ट्रं महाबलम् ॥ २

गच्छ त्वं वीर निर्याहि राक्षसैः परिवारितः ।
जहि दाशरथिं रामं सुग्रीवं वानरैः सह ॥ ३

तथेत्युक्त्वा द्रुततरं मायावी राक्षसेश्वरः ।
निर्जगाम बलैः सार्धं बहुभिः परिवारितः ॥ ४

नागैरश्वैः खरैरुष्ट्रैः संयुक्तः सुसमाहितः ।
पताकाध्वजचित्रैश्च रथैश्च समलंकृतैः ॥ ५

ततो विचित्रकेयूरमकुटैश्च विभूषितः ।
तनुत्राणि च संरुद्ध्य सधनुर्निर्ययौ द्रुतम् ॥ ६

पताकालंकृतं दीप्तं तप्तकाञ्चनभूषणम् ।
रथं प्रदक्षिणं कृत्वा समारोहच्चमूपतिः ॥ ७

यष्टिभिस्तोमरैश्चित्रैः शूलैश्च मुसलैरपि ।
भिण्डिपालैश्च पाशैश्च शक्तिभिः पट्टसैरपि ॥ ८

खड्गैश्चक्रैर्गदाभिश्च निशितैश्च परश्वधैः ।
पदातयश्च निर्यान्ति विविधाः शस्त्रपाणयः ॥ ९

विचित्रवाससः सर्वे दीप्ता राक्षसपुङ्गवाः ।
गजा मदोत्कटाः शूराश्चलन्त इव पर्वताः ॥ १०

ते युद्धकुशलै रूढास्तोमराङ्कुशपाणिभिः ।
अन्ये लक्षणसंयुक्ताः शूरा रूढा महाबलाः ॥ ११

तद्राक्षसबलं घोरं विप्रस्थितमशोभत ।
प्रावृट्काले यथा मेघा नर्दमानाः सविद्युतः ॥ १२

निःसृता दक्षिणद्वारादङ्गदो यत्र यूथपः ।
तेषां निष्क्रममाणानामशुभं समजायत ॥ १३

आकाशाद्विघनात्तीव्रा उल्काश्चाभ्यपतंस्तदा ।
वमन्तः पावकज्वालाः शिवा घोरा ववाशिरे ॥ १४

व्याहरन्ति मृगा घोरा रक्षसां निधनं तदा ।
समापतन्तो योधास्तु प्रास्खलंस्तत्र दारुणम् ॥ १५

एतानौत्पातिकान्दृष्ट्वा वज्रदंष्ट्रो महाबलः ।
धैर्यमालम्ब्य तेजस्वी निर्जगाम रणोत्सुकः ॥ १६

तांस्तु निष्क्रमतो दृष्ट्वा वानरा जितकाशिनः ।
प्रणेदुः सुमहानादान् दिशः शब्देन पूरयन् ॥ १७

ततः प्रवृत्तं तुमुलं हरीणां राक्षसैः सह ।
घोराणां भीमरूपाणामन्योन्यवधकाङ्क्षिणाम् ॥ १८

निष्पतन्तो महोत्साहा भिन्नदेहशिरोधराः ।
रुधिरोक्षितसर्वाङ्गा न्यपतन्धरणीतले ॥ १९

केचिदन्योन्यमासाद्य शूराः परिघपाणयः ।
चिक्षिपुर्विविधाञ्शस्त्रान् समरेष्वनिवर्तिनः ॥ २०

द्रुमाणां च शिलानां च शस्त्राणां चापि निस्वनः ।
श्रूयते सुमहांस्तत्र घोरो हृदयभेदनः ॥ २१

रथनेमिस्वनस्तत्र धनुषश्चापि निःस्वनः ।
शङ्खभेरीमृदङ्गानां बभूव तुमुलः स्वनः ॥ २२

केचिदस्त्राणि संसृज्य बाहुयुद्धमकुर्वत ।
तलैश्च चरणैश्चापि मुष्टिभिश्च द्रुमैरपि ॥ २३

जानुभिश्च हताः केचिद्भिन्नदेहास्तु राक्षसाः ।
शिलाभिश्चूर्णिताः केचिद्वानरैर्युद्धदुर्मदैः ॥ २४

वज्रदंष्ट्रो भृशं बाणैस्सर्वान् वित्रासयन् हरीन् ।
चचार लोकसंहारे पाशहस्त इवान्तकः ॥ २५

बलवन्तोऽस्त्रविदुषो नानाप्रहरणा रणे ।
जघ्नुर्वानरसैन्यानि राक्षसाः क्रोधमूर्च्छिताः ॥ २६

निघ्नतो राक्षसान्दृष्ट्वा सर्वान्वालिसुतो रणे ।
क्रोधेन द्विगुणाविष्टः संवर्तक इवानलः ॥ २७

तान्राक्षसगणान्सर्वान् वृक्षमुद्यम्य वीर्यवान् ।
अङ्गदः क्रोधताम्राक्षः सिंहः क्षुद्रमृगानिव ।
चकार कदनं घोरं शक्रतुल्यपराक्रमः ॥ २८

अङ्गदाभिहतास्तत्र राक्षसा भीमविक्रमाः ।
विभिन्नशिरसः पेतुर्निकृत्ता इव पादपाः ॥ २९

रथैरश्वैर्ध्वजैश्चित्रैः शरीरैर्हरिरक्षसाम् ।
रुधिरेण च संछन्ना भूमिर्भयकरी तदा ॥ ३०

हारकेयूरवस्त्रैश्च विचित्रैः समलंकृता ।
भूमिर्भाति रणे तत्र शारदीव यथा निशा ॥ ३१

अङ्गदस्य च वेगेन तद्राक्षसबलं महत् ।
प्राकम्पत तदा तत्र पवनेनाम्बुदो यथा ॥ ३२

इति त्रिपञ्चाशः सर्गः ॥



## चतुःपञ्चाशः सर्गः ॥

बलस्य च निघातेन अङ्गदस्य जयेन च ।
राक्षसः क्रोधमाविष्टो वज्रदंष्ट्रो महाबलः ॥ १

विष्फार्य च धनुर्घोरं शक्राशनिसमस्वनम् ।
वानराणामनीकानि प्राकिरच्छरवृष्टिभिः ॥ २

राक्षसाश्चापि मुख्यास्ते रथैश्च समवस्थिताः ।
नानाप्रहरणाः शूराः प्रायुध्यन्त तदा रणे ॥ ३

वानराणां तु शूरास्तु सर्वे ते प्लवगर्षभाः ।
अयुध्यन्त शिलाहस्ताः समवेताः समन्ततः ॥ ४

तत्रायुधसहस्राणि तस्मिन्नायोधने भृशम् ।
राक्षसाः कपिमुख्येषु पातयाञ्चक्रिरे तदा ॥ ५

वानराश्चापि रक्षस्सु महावृक्षान्महाशिलाः ।
प्रवीराः पातयामासुर्मत्तवारणसन्निभाः ॥ ६

शूराणां युध्यमानानां समरेष्वनिवर्तिनाम् ।
तद्राक्षसगणानां च सुयुद्धं समवर्तत ॥ ७

प्रभिन्नशिरसः केचिच्छिन्नैः पादैश्च बाहुभिः ।
शस्त्रैरर्पितदेहास्तु रुधिरेण समुक्षिताः ॥ ८

हरयो राक्षसाश्चैव शेरते गां समाश्रिताः ।
कङ्कगृध्रबलाढ्याश्च गोमायुगणसंकुलाः ॥ ९

कबन्धानि समुत्पेतुर्भीरूणां भीषणानि वै ।
भुजपाणिशिरश्छिन्नाश्छिन्नकायाश्च भूतले ।
वानरा राक्षसाश्चापि निपेतुस्तत्र वै रणे ॥ १०

ततो वानरसैन्येन हन्यमानं निशाचरम् ।
प्राभज्यत बलं सर्वं वज्रदंष्ट्रस्य पश्यतः ॥ ११

राक्षसान्भयवित्रस्तान् हन्यमानान् प्लवङ्गमैः ।
दृष्ट्वा स रोषताम्राक्षो वज्रदंष्ट्रः प्रतापवान् ॥ १२

अविवेश धनुष्पाणिस्त्रासयन् हरिवाहिनीम् ।
शरैर्विदारयामास कङ्कपत्रैरजिह्मगैः ॥ १३

बिभेद वानरांस्तत्र सप्ताष्टौ नव पञ्च च ।
विव्याध परमक्रुद्धो वज्रदंष्ट्रः प्रतापवान् ॥ १४

त्रस्ताः सर्वे हरिगणाः शरैः संकृत्तकन्धराः ।
अङ्गदं संप्रधावन्ति प्रजापतिमिव प्रजाः ॥ १५

ततो हरिगणान्भग्नान् दृष्ट्वा वालिसुतस्तदा ।
क्रोधेन वज्रदंष्ट्रं तमुदीक्षन्तमुदैक्षत ॥ १६

वज्रदंष्ट्रोऽङ्गदश्चोभौ सङ्गतौ हरिराक्षसौ ।
चेरतुः परमक्रुद्धौ हरिमत्तगजाविव ॥ १७

ततः शरसहस्रेण वालिपुत्रं महाबलः ।
जघान मर्मदेशेषु शरैरग्निशिखोपमैः ॥ १८

रुधिरोक्षितसर्वाङ्गो वालिसूनुर्महाबलः ।
चिक्षेप वज्रदंष्ट्राय वृक्षं भीमपराक्रमः ॥ १९

दृष्ट्वा पतन्तं तं वृक्षमसंभ्रान्तश्च राक्षसः ।
चिच्छेद बहुधा सोऽपि मथितः पतितो भुवि ॥ २०

तं दृष्ट्वा वज्रदंष्ट्रस्य विक्रमं प्लवगर्षभः ।
प्रगृह्य विपुलं शैलं चिक्षेप च ननाद च ॥ २१

समापतन्तं तं दृष्ट्वा रथादाप्लुत्य वीर्यवान् ।
गदापाणिरसंभ्रान्तः पृथिव्यां समतिष्ठत ॥ २२

अङ्गदेन शिला क्षिप्ता गत्वा तु रणमूर्धनि ।
सचक्रकूबरं साश्वं प्रममाथ रथं तदा ॥ २३

ततोऽन्यं गिरिमाक्षिप्य विपुलं द्रुमभूषितम् ।
वज्रदंष्ट्रस्य शिरसि पातयामास वानरः ॥ २४

अभवच्छोणितोद्गारी वज्रदंष्ट्रः स मूर्च्छितः ।
मुहूर्तमभवन्मूढो गदामालिङ्ग्य निःश्वसन् ॥ २५

स लब्धसंज्ञो गदया वालिपुत्रमवस्थितम् ।
जघान परमक्रुद्धो वक्षोदेशे निशाचरः ॥ २६

गदां त्यक्त्वा ततस्तत्र मुष्टियुद्धमवर्तत ।
अन्योन्यं जघ्नतुस्तत्र तावुभौ हरिराक्षसौ ॥ २७

रुधिरोद्गारिणौ तौ तु प्रहारैर्जनितश्रमौ ।
बभूवतुः सुविक्रान्तावङ्गारकबुधाविव ॥ २८

ततः परमतेजस्वी अङ्गदः कपिकुञ्जरः ।
उत्पाट्य वृक्षं स्थितवान् बहुपुष्पफलाचितम् ॥ २९

जग्राह चार्षभं चर्म खड्गं च विपुलं शुभम् ।
किङ्किणीजालसंछन्नं चर्मणा च परिष्कृतम् ॥ ३०

विचित्रांश्चेरतुर्मार्गान् रुषितौ कपिराक्षसौ ।
जघ्नतुश्च तदाऽन्योन्यं निर्दयं जयकाङ्क्षिणौ ॥ ३१

व्रणैः सास्रैरशोभेतां पुष्पिताविव किंशुकौ ।
युध्यमानौ परिश्रान्तौ जानुभ्यामवनीं गतौ ॥ ३२

निमेषान्तरमात्रेण अङ्गदः कपिकुञ्जरः ।
उदतिष्ठत दीप्ताक्षो दण्डाहत इवोरगः ॥ ३३

निर्मलेन सुधौतेन खड्गेनास्य महच्छिरः ।
जघान वज्रदंष्ट्रस्य वालिसूनुर्महाबलः ॥ ३४

रुधिरोक्षितगात्रस्य बभूव पतितं द्विधा ।
सरोषपरिवृत्ताक्षं शुभं खड्ग हतं शिरः ॥ ३५

वज्रदंष्ट्रं हतं दृष्ट्वा राक्षसा भयमोहिताः ।
त्रस्ताः प्रत्यपतँल्लङ्कां वध्यमानाः प्लवङ्गमैः ।
विषण्णवदना दीना ह्रिया किञ्चिदवाङ्मुखाः ॥ ३६

निहत्य तं वज्रधरप्रभावं
स वालिसूनुः कपिसैन्यमध्ये ।
जगाम हर्षं महितो महाबलः
सहस्रनेत्रस्त्रिदशैरिवावृतः ॥ ३७

इति चतुःपञ्चाशः सर्गः ॥



## पञ्चपञ्चाशः सर्गः ॥



वज्रदंष्ट्रं हतं श्रुत्वा वालिपुत्रेण रावणः ।
बलाध्यक्षमुवाचेदं कृताञ्जलिमुपस्थितम् ॥ १

शीघ्रं निर्यान्तु दुर्धर्षा राक्षसा भीमविक्रमाः ।
अकम्पनं पुरस्कृत्य सर्वशस्त्रप्रकोविदम् ॥ २

एष शास्ता च गोप्ता च नेता च युधि संमतः ।
भूतिकामश्च मे नित्यं नित्यं च समरप्रियः ॥ ३

एष जेष्यति काकुत्स्थौ सुग्रीवं च महाबलम् ।
वानरांश्चापरान्घोरान् वधिष्यति परन्तपः ॥ ४

परिगृह्य स तामाज्ञां रावणस्य महाबलः ।
बलं संत्वरयामास तदा लघुपराक्रमः ॥ ५

ततो नानाप्रहरणा भीमाक्षा भीमदर्शनाः ।
निष्पेतू राक्षसां मुख्या बलाध्यक्षप्रचोदिताः ॥ ६

रथमास्थाय विपुलं तप्तकाञ्चनकुण्डलः ।
मेघाभो मेघवर्णश्च मेघस्वनमहास्वनः ।
राक्षसैः संवृतो भीमैस्तदा निर्यात्यकम्पनः ॥ ७

न हि कम्पयितुं शक्यः सुरैरपि महामृधे ।
अकम्पनस्ततस्तेषामादित्य इव तेजसा ॥ ८

तस्य निर्धावमानस्य संरब्धस्य युयुत्सया ।
अकस्माद्दैन्यमागच्छद्धयानां रथवाहिनाम् ॥ ९

व्यस्फुरन्नयनं चास्य सव्यं युद्धाभिनन्दिनः ।
विवर्णो मुखवर्णश्च गद्गदश्चाभवत्स्वनः ॥ १०

अभवत्सुदिने चापि दुर्दिनं रूक्षमारुतम् ।
ऊचुः खगा मृगाः सर्वे वाचः क्रूरा भयावहाः ॥ ११

स सिंहोपचितस्कन्धः शार्दूलसमविक्रमः ।
तानुत्पातानचिन्त्यैव निर्जगाम रणाचिरम् ॥ १२

तदा निर्गच्छतस्तस्य रक्षसः सह राक्षसैः ।
बभूव सुमहान्नादः क्षोभयन्निव सागरम् ॥ १३

तेन शब्देन वित्रस्ता वानराणां महाचमूः ।
द्रुमशैलप्रहरणा योद्धुं समवतिष्ठत ॥ १४

तेषां युद्धं महारौद्रं सञ्जज्ञे हरिरक्षसाम् ।
रामरावणयोरर्थे समभित्यक्तजीविनाम् ॥ १५

सर्वे ह्यतिबलाः शूराः सर्वे पर्वतसन्निभाः ।
हरयो राक्षसाश्चैव परस्परजिघांसया ॥ १६

तेषां विनर्दतां शब्दः संयुगेऽतितरस्विनाम् ।
शुश्रुवे सुमहान्क्रोधादन्योन्यमभिगर्जताम् ॥ १७

रजश्चारुणवर्णाभं सुभीममभवद्भृशम् ।
उद्धूतं हरिरक्षोभिः संरुरोध दिशो दश ॥ १८

अन्योन्यं रजसा तेन कौशेयोद्धतपाण्डुना ।
संवृतानि च भूतानि ददृशुर्न रणाजिरे ॥ १९

न ध्वजा न पताका वा चर्म वा तुरगोऽपि वा ।
आयुधं स्यन्दनं वाऽपि ददृशे तेन रेणुना ॥ २०

शब्दश्च सुमहांस्तेषां नर्दतामभिधावताम् ।
श्रूयते तुमुले युद्धे न रूपाणि चकाशिरे ॥ २१

हरीनेव सुसंक्रुद्धा हरयो जघ्नुराहवे ।
राक्षसाश्चापि रक्षांसि निजघ्नुस्तिमिरे तदा ॥ २२

परांश्चैव विनिघ्नन्तः स्वांश्च वानरराक्षसाः ।
रुधिरार्द्रां तदा चक्रुर्महीं पङ्कानुलेपनाम् ॥ २३

ततस्तु रुधिरौघेण सिक्तं व्यपगतं रजः ।
शरीरशवसङ्कीर्णा बभूव च वसुन्धरा ॥ २४

द्रुमशक्तिशिलाप्रासैर्गदापरिघतोमरैः ।
हरयो राक्षसाश्चैव जघ्नुरन्योन्यमोजसा ॥ २५

बाहुभिः परिघाकारैर्युध्यन्तः पर्वतोपमाः ।
हरयो भीमकर्माणो राक्षसाञ्जघ्नुराहवे ॥ २६

राक्षसास्त्वपि संक्रुद्धाः प्रासतोमरपाणयः ।
कपीन्निजघ्निरे तत्र शस्त्रैः परमदारुणैः ॥ २७

अकम्पनः सुसंक्रुद्धो राक्षसानां चमूपतिः ।
संहर्षयति तान्सर्वान् राक्षसान् भीमविक्रमान् ॥ २८

हरयस्त्वपि रक्षांसि महाद्रुममहाश्मभिः ।
विदारयन्त्यभिक्रम्य शस्त्राण्याच्छिद्य वीर्यतः ॥ २९

एतस्मिन्नन्तरे वीरा हरयः कुमुदो नलः ।
मैन्दश्च द्विविदः क्रुद्धाश्चक्रुर्वेगमनुत्तमम् ॥ ३०

ते तु वृक्षैर्महावेगा राक्षसानां चमूमुखे ।
कदनं सुमहच्चक्रुर्लीलया हरियूथपाः ।
ममन्थू राक्षसान्सर्वे वानरा गणशो भृशम् ॥ ३१

इति पञ्चपञ्चाशः सर्गः ॥



